# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 228.

चतुर्वर्गचिन्तामणिः।

## CHATURVARGA-CHINTÁMAṆI,

BY

HEMÁDRI.

EDITED BY

PAṆḌITA BHARATACHANDRA S'IROMAṆI.

*Professor of Law, Sanskrit College of Calcutta.*

PART. I. DÁNAKHAṆḌA.

FASCICULUS I.



CALCUTTA

PRINTED AT THE GANES'A PRESS.

1871.

# चतुर्व्वर्गचिन्तामणि-

## दानखण्डम्।

त्रयोदशाध्यायात्मकम्।

श्रीहेमाद्रिणा विरचितम्।

आसियाटिक्-सोसायिटिनामक समाजानुमत्या-साहाय्येन च

प्रचारितम्।

श्रीभरतचन्द्रशिरोमणिना

परिशोधितम्।

..............................

कलिकाता

नवीनयन्त्रे मुद्रितम्।

सम्वत् १९२०।

BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NOS. 228, 237, 242, 245, 257, 262, 267, 274, 278, 281 & 290.

---

# Chaturvarga Chintámani.

BY

## HEMÁDRI.

EDITED BY

PANḌITA BHARATACHANDRA ŚIROMAṆI.

---

VOL. I.

## DÁNAKHAṆḌA.

---

CALCUTTA:

PRINTED AT THE GANEŚA PRESS.

1873.

# विज्ञापनम् ।

---

महामहोपाध्यायश्रीहेमाद्रिविरचितचतुर्व्वर्गचिन्तामणिर्नाम ग्रन्थोऽयं, यत्र व्रतखण्ड-दानखण्ड-कालखण्ड-श्राद्धखण्ड-परिशेषखण्डैः पञ्चभिर्व्विभक्तस्तेषां दानखण्डात्मकचिन्तामणिः, आसियाटिकसोसाइटी सभाध्यक्षमहोदयानामनुमत्या संस्कृतविद्यामन्दिरस्थस्मृतिशास्त्राध्यापकचरेण मयाधुना मुद्रितः, परिशोधितश्च, चतुर्व्वर्गचिन्तामणौ स्मृतिनिबन्धे महाशास्त्रे ब्राह्मणादीनां वर्णानां ब्रह्मचर्य्यादीनामाश्रमाणामनुलोम-प्रतिलोमज-सङ्करजातीनाञ्च षड्विधधर्म्मा अशेषेण निर्णीताः सन्ति, ग्रन्थोऽयमतीव विस्तरः, सर्व्वसाधारणैर्व्वहुवित्तव्यायायाससाध्यतया संग्रहीतुं बहुलतया च स्वयं लेखितुमशक्यस्तेनास्य विरलप्रचारतया सर्व्वधर्म्माः समाचार-व्यवहारसंश्रयाः साधारणैर्निःसन्देहमवगन्तुमशक्यन्तेऽतः करुणया सर्व्वजनगोचरार्थं सुमूल्यं मुद्रादिकारणव्ययोपयुक्तं न तु लाभार्थं कृत्वा मुद्रितः, अस्य तु मुद्राङ्कनेन हिन्दुजातीनां महोपकारः सम्भाव्यतेऽस्माणरपि संशयोनास्तीति, साम्प्रतं विज्ञाप्यते हेमाद्रिस्तु, देवगिरिस्थ-यादववंशमहाराजाधिराजमहादेवचक्रवर्त्तिनो राज्ञो धर्म्माधिकरणपण्डित आसीत्, हेमाद्रिरपि स्वयं नृपतिः, यस्य सभापण्डितो महामहोपाध्यायः श्रीवोपदेव आसीत्, अनुमीयते पञ्चवसुधरेन्दुमिते शकसम्वत्सरे द्विचादिवत्सरन्यूनाधिक्येन समजनिष्ट । हेमाद्रिरपि तदैव समुदयं लेभे च, अतेयं किंवदन्ती, एतद्ग्रन्थकर्त्ता श्रीवोपदेव

इति, वोपदेवकृतपदार्थादर्शाभिधानग्रन्थकारिकाम् अनेकस्थाने उत्थाप्य यथातत्त्वं कारिकाव्याख्यानङ्कृत्वा प्रामाण्यसम्पादनार्थं मूलं हेमाद्रौ चिन्त्यमित्यादिनिर्णयसिन्धुप्रभृतिसन्दर्भेष्वेवं प्रतीमश्च, यद्यपि क्रमप्राप्तं व्रतखण्डमेवादौ मुद्रयितुमुचितमासीत् तत् विहाय व्युत्क्रमेण दानखण्डमुद्राङ्कने सन्दिहानस्य जिज्ञासोर्जिज्ञासाविनिवारणबीजमिदं। व्रतखण्डस्यादर्शभूतमेकमात्रं पुस्तकं लब्धं दानखण्डस्य चत्वारि पुस्तकानि परिप्राप्तानि अतो हेतोः क्रमप्राप्तमपि तन्न मुद्रितम् एकमात्रपुस्तकदर्शनविश्वासेन मुद्राङ्कनस्यानौचित्यं चतुर्णां पुस्तकानां द्वे तु संस्कृतविद्यामन्दिरपुस्तकागारस्थिते एकन्तु शोभावाजारस्थ श्रीराजेन्द्रनारायण वाहादुरसदनस्थं अन्यत्तु आसियाटिकसोसायिटीपुस्तकसदनस्थम् एतेषामपेक्षाकृतं उक्तराजवाटीस्थं पुस्तकं समीचीनं प्रतिभाति, चतुर्णां पुस्तकानां केनचित् केनचिदंशेन विरोधोऽस्ति कुत्रचित् कतिचित् श्लोका अधिकाः क्वचिच्च न्यूनाः कस्मिंश्चिदंशे अक्षराणि विलुप्तानीदृग्दशायां सत्यामपि बहुतरपरिश्रमेण परस्परपाठं विचार्य्य मन्वादिसंहिताः स्मार्त्तादिस्मृतिनिबन्धान् सामञ्जस्यार्थं समालोच्य स्थिरीकृत्य मुद्रितो यद्यपि तथापि।

> महारण्यच्छेदात् परमपि कियच्छिष्टमपरं
> ततश्छेत्तुर्दोषो नहि भवति भाव्येहि विषये।
> त्वनन्यायादत्र क्वचिदपि भवेद्दुष्टमपरं
> वचः क्षम्यं याचे विनतिततिपूर्व्वं हि कृतिनः॥

इदमपि द्रष्टव्यम्।

यद्यपि शिरोभागे चतुर्व्वर्गचिन्तामणिनामलिखनस्यौचित्ये-ऽपि सर्व्वत्र ग्रन्थेषु हेमाद्रौ चिन्त्यं, हेमाद्राविभिहितमित्यादि भूरि-भूरि प्रयोगदर्शनेन प्रसिद्धमेतन्नामेति बुद्धावाकलय्य पुरुषस्य व्यावहारिकनामराध्याश्रितनाम्नो र्व्यावहारिकनाम्नः प्रसिद्धत्वमिव चतुर्व्वर्गचिन्तामणिसमाख्यां विहाय हेमाद्रिनामोल्लिखितमिति न किञ्चिदनुचितम्।

श्रीभरतचन्द्रशर्म्मा।

---

# सूचीपत्रम्।

न



प



फ

# ग्रन्थानां वचनसंख्या।

—

गणेशाय नमः ।

# हेमाद्रिः ।

—————

## तत्र दानखण्डं ।

### प्रथमोऽध्यायः ।

कल्याणानि ददातु वो गणपतिर्यस्मिन्नतुष्टे सति
क्षोदीयस्यपि कर्मणि प्रभवितुं ब्रह्मापि जिह्मायते ।
जाते यच्चरणप्रसादसुलभे सौभाग्यभाग्योदये
रङ्कस्याक्रमनक्षमा निविशते देवेन्द्रलक्ष्मीरपि ॥ १ ॥
यस्मात्पुत्रहिरण्यगर्भरसनासिंहासनाध्यासिनी
सेयं वागधिदेवता वितरतु श्रेयांसि भूयांसि वः ।
यत्पादामलकोमलाङ्गुलिनखज्योत्स्नाभिरुद्वेलितः
शब्दब्रह्मसुधाम्बुधिर्बुधमनस्युच्छृङ्खलं खेलति ॥ २ ॥
रागः क्वाप्य नवस्तवश्रुतिरियं चेतश्चमत्कारिणी
मुग्धेवास्य यथा मया शुभरते वैदग्ध्यमाविष्कृतं ।
आनीते दयितेव सा शुभरते मय्यद्य धत्ते भवान्
इत्युक्तो मधुजिन्निकुञ्जसरसुखः श्लिष्यन् प्रियां पातु वः ॥ ३ ॥
संसक्तो धरणीधरेन्द्रसुभुवि क्रीडन्मृगाङ्कानन-
श्रेणीमाकलयन् गुणान्वयमिलल्लब्धाननस्यातिमान् ।
काव्यारामविनोदिनां निजपदं सुक्तामयं दर्शयन्
भूयान्नित्यमनेकपापहतये श्रीकण्ठकण्ठीरवः ॥ ४ ॥
ते देवस्य गभस्तयो दिनपतेरापन्नखेदच्छिदो
निष्कृन्तन्तु कृतान्तपत्तनपथप्रस्थानदौःस्थ्यानि वः ।

यैः सौवर्णमिवाखिलं करुणया निर्म्मातुमभ्युद्यतैः
कीर्णस्वर्णपरागरागघटितं दिक्चक्रमालक्ष्यते ॥ ५ ॥

अस्ति शस्तगुणस्तोमः सोमवंशविभूषणं।
महादेव इति ख्यातो राजराजेव भूतले ॥ ६ ॥

संग्रामेष्वधमर्णतामुपगता वीराः पराःकोटयः
सर्व्वस्वप्रतिपादनेन विविधानार्थोभिरस्य क्षणात्।
स्वस्मादाददते निरत्ययसुखं तच्चैतदीयंयशो
दिक्कालानिव साश्वतां गमयितुंदिङ्मण्डलीं मुञ्चति ॥७॥

मैत्रीमञ्जय गुर्ज्जरव्रजपरां नेपालपालक्षमा-
मार्ज्जां पालय मालवेश्वर भयं नीरन्ध्रमन्ध्र स्मर।
सप्तद्वीपमहीपतीनिति हितामध्यापयन्ती धियं
यत्कीर्त्तिः सुखदायिनी रिपुकुले मानुष्यदा मन्यते ॥८॥

कैलासादितलक्षमार्गणगणं स्तुत्वैतदीयंगुणं
येषां श्रेणि रनुस्मरन्त्यहरहस्तुष्टाव दानाद्भुतं।
तेषामेव महाहवेषु मिलतां प्रत्यर्थिनामर्थिना-
मप्यस्याथ भुजं व्रजन्ति विलयं सैन्यानि दैन्यानि च ॥ ९ ॥

अस्योच्चैर्भीमभूमीरुहगहनगुहागर्भगर्जन्मृगेन्द्र-
त्रासव्यासप्रसङ्गोच्चलनकुलकुलव्याकुलव्यालमालां।
वारं वारं स्मृतैतद्भुजभुजगयुगस्फीतिभीतिज्वरौघां
मूर्च्छांमृच्छन्ति हन्त क्षितिधरधरणीं लङ्घयन्तो द्विषन्तः ॥१०॥

षोड़शक्रतवो येन चक्रिरे चक्रवर्त्तिना।
अपूर्णपश्वयज्ञानां नृपाणां तेन का तुला ॥ ११ ॥

अनेन चिन्तामणि कामधेनु

कल्पद्रुमानर्थिजनाय दत्तान्।
विलोक्य शङ्के किममुष्य सर्व्वं
गीर्व्वाणनाथोऽपि करप्रदोऽभूत्॥ १२॥

तस्यास्ति नाम हेमाद्रिः सर्व्वश्रीकरणप्रभुः।
निजोदारतया यश्च सर्व्वश्रीकरणप्रभुः॥ १३॥

तस्य श्रीकरणेशस्य कापि लेखनचातुरी।
यशःप्रशस्तिभिस्तूर्णं येन दिग्भित्तयो भृताः॥१४॥

लिपिं विधात्रा लिखितां जनस्य भाले विभूत्या परिमृज्य दुष्टां।
कल्याणिनीमेष लिखत्यथैनां चित्रां प्रमाणी कुरुते विधिश्च॥१५॥

संचिन्त्य संचिन्त्य तदेतदीयं धत्ते मनो विस्मय मस्मदीयं।
प्राग्जन्मविद्यास्मरणक्षमोऽयं क्षणेन तद्विस्मृतिमेति दत्त्वा १६॥

मन्ये तत्सततदानवारिलहरीपूर्णोऽयमर्णोनिधिः
कल्पान्तेऽपि न शोषदोषविषमां धत्ते कदाचिद्दशां।
किञ्चैतं जलधिस्थितिप्रतिभुवं निश्चित्य दैत्यारिणा-
निश्चिन्तेन भुजङ्गपुङ्गवतनूतल्पे सुखं सुप्यताम्॥ १७॥

चित्रं तस्य नदानवृष्टिपयसस्तस्य किं ब्रूमहे
यस्मिन्नन्य वदान्यकीर्त्तिरतुला धत्ते तृणश्रेणितां।
यद्भूमौ पतितं ग्रसिष्णु जनतापङ्कानि यच्चार्थिनां।
न्यस्तं हस्ततलेषु भालफलके पापां लिपिं लुम्पति॥ १८॥

तत्तर्पितो देवगणः स नूनमरोचकी चन्द्रमसः सुधायां।
क्षयन्तु चन्द्रस्य तदीयकीर्त्तिस्पर्द्धासमुत्थानि फलन्त्यधानि॥ १९॥

शूराणामवधि र्निधिश्च यशसामेकाश्रयः सम्पदां
दातॄणां प्रथमः कलाकुलगृहं वैदग्ध्यभाजां गुरुः।

धौरेयश्च विपश्चितां सुकृतिनामद्वैतवादास्पदं
नैवासीन्नच वर्त्तते न भविता हेमाद्रिसूरेः परः ॥२०॥
विभर्त्ति नूनं द्विजवेश मेष स एव हेमाद्रिरिति प्रतीमः।
उदारसन्तानवती यदस्य कल्पद्रुमं दक्षिणबाहुमाहुः ॥ २१ ॥
अथा मूना धर्म्मकथादरिद्रं त्रैलोक्यमालोक्य कलेर्बलेन।
तस्योपकारे दधता सुचिन्तां चिन्तामणिः प्रादुरकारि चारुः॥२२॥
पञ्चखण्डात्मके शास्त्रे व्रतखण्डादनन्तरं।
दानखण्डमिदं,-तत्र द्वितीय मथ कथ्यते ॥ २३ ॥
अस्मिन्ननेकदानौघरत्नरत्नाकरायिते।
महाप्रकरणानाञ्च विज्ञेयोऽयमनुक्रमः ॥ २४ ॥
दानस्तुति स्ततोदानस्वरूपस्य विरूपणम्।
अङ्गप्रसङ्गो दानानां परिभाषाभिभाषणम् ॥ २५ ॥
श्रोतुः श्रद्धाभिवृद्ध्यर्थमथदानफलावलिः।
तुलापुरुषमुख्यानि महादानानि षोड़श ॥ २६ ॥
अखर्वपर्वतश्रेणि विश्राणनविधिस्ततः।
परस्तादतिदानानां विधिर्विधुतपातकः ॥ २७ ॥
ततोदशमहादानविधिर्वैभववर्णनम्।
कृष्णाजिनानि दानानि देवतादानसंग्रहः ॥ २८ ॥
अथ कालविशेषेण बहुधा दानवर्णनम्।
अनन्तफलदानानामनन्तरमुपक्रमः ॥ २९ ॥
एवं प्रकरणान्यत्र त्रयोदश महामतिः।
ब्रवीति प्राज्यराज्यादिसाधनानि मनीषिणाम् ॥ ३० ॥
अथ दानप्रशंसा तावदभिधीयते।——तत्र व्यासः।

वर्णानामाश्रमाणाञ्च चातुर्वर्ण्ये युधिष्ठिर ।
दानधर्म्मं प्रवक्ष्यामि यथा देवेन भाषितम् ॥

नन्दिपुराणे । दानं परं प्रशंसन्ति दानमेव परायणं ।
दानं बन्धुर्मनुष्याणां दानं कोषो ह्यनुत्तमं* ॥
दानं † तत्त्वःपरं द्रव्यं दानं माता पिता यथा ।
दानेन न विना किञ्चित्प्रार्थितं फल माप्यते ॥
अपि वालाग्रमात्रस्य तुला तस्य न विद्यते ।
न दानशौलिनामापत्तस्माद्दानं समाश्रयेत् ॥
हारनूपुरसंघोषपूरितोत्तममन्दिरः ।
लावण्यगुणसम्पत्ति र्दानादेव हि लभ्यते ॥

सौरपुराणे । न दानादधिकं किञ्चिद्दृश्यते भुवनत्रये ।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ॥
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति ।
दानेन लभ्यते विद्या दानेन युवतीजनः ।
धर्म्मार्थकाममोक्षाणां साधनं परमं स्मृतम् ॥

उशना । दानादृते नोपचारो विद्यते धनिनोऽपरः ।
दीयमानं हि तत्तस्य भूय एवाभिवर्द्धते ॥

आह वेदव्यासः । यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥
यद्ददाति यदश्नाति तदेव धनिनो धनं ।
अन्ये मृतस्य क्रीड़न्ति दारैरपि धनैरपि ॥

---

* दानं कामफलाढ्या दानं चिन्तामणिर्नृणामिति क्वचित्पाठः ।

† पुनरिति क्वचित्पाठः ।

बृहस्पतिः। तपोधर्म्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतं।
द्वापरे चाध्वराः प्रोक्ताः कलौ दानं दया दमः॥
अत्रार्थे शतपथश्रुतिः।
तदेतत् त्रयं शिक्षेत् दमं दानं दयामिति।
दानेन भोगी भवति मेधावी वृद्धसेवया।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः॥
यमः। यतीनान्तु शमो धर्म्मस्त्वनाहारो वनौकसां।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणां॥
पापकर्म्मसमायुक्तं पतन्तं नरके नरं।
त्रायते दान मेकन्तु पात्रभूते द्विजे कृतं॥
तथा न्यायेनार्जनमर्थानां वर्द्धनं चाभिरक्षणं।
सत्पात्रप्रतिपत्तिश्च सर्व्वशास्त्रेषु पठ्यते॥
कूर्म्मपुराणं। दानधर्म्मात्परो धर्म्मो भूतानां नेह विद्यते।
तस्माद्विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः॥
द्विजातिभिरित्युपलक्षणं दानस्य सर्व्वसाधारणत्वात्।
महाभारते। आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः।
गतिरेकैव वित्तस्य दान मन्या विपत्तयः॥
ब्राह्मणायाभिरूपाय यो दद्यादर्थमर्थिने।
निदधाति निधिं श्रेष्टं पारलौकिकमात्मनः॥
कूर्म्मपुराणे। न हि दानात् परतरमन्यदस्तीति मे मतिः।
धनधान्यवतः किञ्चिद्धार्य्यं राजतस्करैः॥
वह्निपुराणे। तपःसु चैव तीर्थेषु व्रतेषु नियमेषु च।
सम्यक् चीर्णेषु विप्रर्षे पश्चाद्दानं समाचरेत्॥

यस्य वित्तं न दानाय नोपभोगाय देहिनां।
नापि कीर्त्त्यै, न धर्म्माय तस्य वित्तं निरर्थकं॥
तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ।
दद्यात्सम्यक् द्विजातिभ्यः कीर्त्तनानिच कारयेत्॥

व्यासः। अहन्यहनि याचन्तमहं मन्ये गुरुं यथा।
मार्जनं दर्पणस्येव यः करोति दिने दिने॥
किं धनेन करिष्यन्ति देहिनो भङ्गुराश्रयाः।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतं॥
यदि नाम न धर्म्माय न कामाय न कीर्त्तये।
यत्परित्यज्य गन्तव्यं तद्धनं किं न दीयते॥
* इच्छानुरूपो विभवः कदा कस्य भविष्यति।
अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति॥
दातारं कृपणं मन्ये मृतोऽप्यर्थं-न मुञ्चति।

मनुः। दानधर्म्मं निषेवेत नित्यमैष्टिकपौर्त्तिकं।
परितुष्टेन भावेन पात्र मासाद्य शक्तितः॥
इष्टे यज्ञे यद्दीयते दक्षिणादि तदैष्टिकं।
बहिर्वेदि च यद्दानं दीयते तत् पौर्त्तिकं।
यत् किञ्चिदपि दातव्यं याचितेनानसूयया।
उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्व्वतः॥
स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये।
मुमुक्षुणा च दातव्यं ब्राह्मणेभ्य स्तथान्वहं॥

विष्णुधर्म्मात्। न ददाति च दानानि मोघं तस्य धनार्जनं।

---

* ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किं न दीयते क्वचित्पाठः।

उत्थायोत्थाय दातव्यं ब्राह्मणेभ्यो युधिष्ठिर ॥

वह्निपुराणे । अन्नं मूलं फलं शाकं मुद्गपात्रं तपोधनाः ।
दानं विभवतोदत्त्वा नराः स्वर्थास्ति धर्म्मिणः ॥ तथा, ।
यद्ददयजन्ति ददन्तीह भोगान् भुञ्जन्ति निश्चयः ।
मा मुदिश्च न ते मूढ़ा इहैव सुखिनः परे ॥

याज्ञवल्क्यः । दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतन्तु शक्तितः ॥

मत्स्यपुराणे । * उक्तसर्वगुणोपेत मुक्तदोषैर्विवर्जितम् ।
कामधुक् धेनुवद्दानं फलत्यामेप्सितं फलम् ॥
† इह-कीर्त्तिं वदान्याख्यां-स्फीताम् भोगांस्त्रिपिष्टपे ।
दानं अर्हा हतीयेऽपि जन्मनि प्रभवोत्तमे ॥ वदान्योबहुप्रदः ।
दानमेव परोधर्म्मो दानमेव परन्तपः ।
न हि दानात् परतरमिह लोके-परत्र च ॥
दानेन भोगानाप्नोति दानेनायुश्च विन्दति ।
नरः स्वर्गापवर्गौ च दानेनैव समश्नुते ॥

मार्कण्डेय पुराणे । कुटुम्बं पीडयित्वापि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवेऽन्नं आत्मनोभूतिमिच्छता ॥

देवलः । दुर्लभं भारते वर्षे जन्म तस्मान्मनुष्यता ।
मानुष्याद्ब्राह्मणत्वञ्च दुर्लभं सुतरां मतं ॥
विप्रत्वे सति दुष्प्रापा विद्यादिगुणयोगिता ।

---

* उक्तः सर्वगुणोपेत मुक्तदोषैर्विवर्जितः क्वचित्पाठः ।
† इह-कीर्त्ति-वदान्याख्या-क्वचित्पाठः ।

तत्र न्यायार्जितार्थाप्तिस्ततो भक्त्याप्तिरिष्यते ॥
लब्ध्वैतद्गुणसंयोगं तीर्थं पात्रञ्च पर्व्व च ।
दानानि ये प्रयच्छन्ति कृतार्थास्ते नरा भुवि ॥

अगस्त्यः । गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्य्यते मही ॥
येन भुक्तं न च हुतं न तीर्थे* मरणं कृतम् ।
हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्च्चितम् ॥
दीना विवसना रुक्षाः कपालाङ्कितपाणयः ।
दृश्यन्ते हि महाराज जायमानाः पुनः पुनः ॥

विष्णुधर्म्मात् । सीदते हिजमुख्याय योऽर्थिने न प्रयच्छति ।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते ॥

कूर्म्मपुराणे । यस्तु द्रव्यार्जनं कृत्वा नार्चयेत् ब्राह्मणान् सुरान् ।
सर्वस्वमपहृत्यैनं राजा राष्ट्रात् प्रवासयेत् ॥

ब्रह्मपुराणे । सदाचाराः कुलीनाश्च रूपवन्तः प्रियंवदाः ।
बहुश्रुताश्च धर्म्मज्ञा याचमानाः परात् स्पृहात्† ॥
दृश्यन्ते दुःखिनः सर्वे प्राणिनः सर्वदा मुने ।
अदत्तदानाज्जायन्ते परभाग्योपजीविनः ॥

व्यासः । अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा ।
तदिदं देहि देहीति विपरीतमुपस्थितम् ॥

स्कान्दपुराणे । बोधयन्ति न याचन्ते देहीति कृपणं जनाः ।
अवस्थेयमदानस्य माभूदेवं भवानपि ॥

---

* सुतीर्थेमरणमिति पाठान्तरम् ।
† परान् स्पृहानिति पाठान्तरम् ।

देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः।
यदिदं कष्टमर्थित्वं प्रागदानफलं हि तत्॥
एकेन तिष्ठताधस्तादन्येनोपरितिष्ठता।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः॥
दीयमानन्तु यो मोहाद्गोविप्राग्निसुरेषु च।
निवारयति पापात्मा तिर्य्यग्योनिं व्रजेत्तु सः॥
'दीयमानं' तदुद्देशेन त्यज्यमानमित्यर्थः।
शातातपः। मा ददस्वेति यो ब्रूयात् गव्यग्नौ ब्राह्मणेषु च।
तिर्य्यग्योनिशतं गत्वा चाण्डालेष्वभिजायते॥
यमः। कन्याप्रदाने यज्ञे वा यस्मिन् वा धर्म्मसङ्कटे।
विघ्नमाचरते यस्तु तमाहुर्ब्रह्मघातकम्॥
तस्माद्विभूतिमन्विच्छन्नदाने विघ्नमाचरेत्।
दद्यादहरहः पात्रे लोकद्वयजिगीषया॥
महाभारते। अर्हतामनुरूपाणां नादेयं ह्यस्ति किञ्चन।
उच्चैःश्रवसमप्यश्वं प्रापणीयं सतां विदुः॥
अनुनीय यथाकामं सत्यसन्धो महाव्रतः।
स्वैः प्राणैर्ब्राह्मणः प्राणान् परित्राय दिवं गतः॥
रन्तिदेवश्च साङ्कृत्यो वशिष्ठाय महात्मने।
अपः प्रदाय शीताश्च नाकपृष्ठमितोगतः॥
आत्रेयचन्द्रदमयोरर्हतोर्विविधं धनम्।
दत्त्वा लोकान् ययौ धीमाननन्तान् स महीपतिः॥
शिविरौशीनराङ्गानि पुत्रञ्च प्रियमौरसम्।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमुपागतः॥

प्रतर्द्दनः काशपतिः प्रदाय नयने स्वके।
ब्राह्मणायातुलां कीर्त्तिमिह चामुत्र चाश्नुते॥
दिव्यं शष्टशलाकन्तु सौवर्णं परमर्षि तत्।
छत्रं देवावृधो दत्त्वा सराष्ट्रोऽभ्यपतद्दिवम्॥
'शष्टशलाकं' उज्ज्वलपञ्जरम्।
सङ्कृतिश्च तथात्रेयः शिष्येभ्यो ब्रह्म निर्गुणम्।
उपदिश्य महातेजा गतो लोकाननुत्तमान्॥
अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान्।
अर्बुदानि दशैकञ्च सराष्ट्रोऽभ्यपतद्दिवम्॥
सावित्री कुण्डले दिव्ये शरीरं जनमेजयः।
रम्यमावसथञ्चैव दत्त्वामुं लोकमास्थितः॥
ब्राह्मणार्थे परित्यज्य जम्मतुर्लोकमुत्तमम्।
सर्व्वरत्नं वृषा दर्भो युवानोऽन्याः प्रियास्त्रियः॥
रम्यमावसथञ्चैवदत्त्वामुं लोकमास्थितः।
निमीराष्ट्रञ्च वैदेही जामदग्न्यो वसुन्धराम्॥
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्व्वीं सपत्तनाम्।
अवर्षिणि च पर्ज्जन्ये सर्व्वभूतानि चासृजत्॥
राजा मित्रसहश्चैव वशिष्ठाय महात्मने।
मदयन्तीं प्रियां दत्त्वा तया सह दिवंगतः॥
सहस्रजिच्च राजर्षिः प्राणानिष्टान् महायशाः।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान्॥
सर्व्वकामैश्च सम्पूर्णं दत्त्वा वेश्म हिरण्मयम्।
मुद्गलाय गतः स्वर्गं शतद्युम्नो महामतिः॥

नाम्ना च द्युतिमान्नाम शाल्वराजः प्रतापवान्।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान्॥
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम्।
सुवर्णहस्ताय गतो लोकान् देवैरभिष्टुतान्॥
लोमपादश्च राजर्षिः स तां दत्त्वा सुतां प्रभुः।
ऋष्यशृङ्गाय विपुलैः सर्वकामैरयुज्यत॥
दत्त्वा शतसहस्रन्तु गवां राजा प्रसेनजित्।
सवत्सानां महातेजा गतो लोकाननुत्तमान्॥
एते चान्ये च बहवो दानेन तपसा सह।
महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः॥
तेषां प्रतिष्ठिता कीर्त्तिर्यावत् स्थास्यति मेदिनी।
दानयज्ञप्रजासर्गैरेके हि दिवमाप्नुयुः॥

दानेन भूता वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम्। परोऽपि बन्धुत्वमुपैति दानात् दानं हि सर्वव्यसनानि हन्ति॥ इति-श्रीमहाराजाधिराज-श्रीमहादेवस्य समस्तकरणाधीश्वरसकल-विद्या-विशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे दानप्रशंसाप्रकरणम्।

---

## द्वितीयोऽध्यायः।

अथ दानस्वरूपमुपवर्ण्यते॥

प्राचामाचारभाजां धुरमनुसरता येन सृष्टैर्विशिष्टै-
रिष्टापूर्त्तै रचार्होकृतजगतिनिवहै * विश्वमाख्यां समेति।
सोऽयं हेमाद्रिसूरिर्विविधबुधमनश्चित्रमैत्रीपवित्रं
नानादान-स्वरूप-प्रकरणमधुना वक्ति निर्मुक्तदोषः॥

तत्र देवलः। अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम्।
दानमित्यभिनिर्द्दिष्टं व्याख्यानं तस्य कथ्यते॥

'उदिते' शास्त्रनिरूपिते। अर्थानां प्रतिपादनं नाम पात्रं प्रति स्वस्वामिभावापादनपर्य्यन्तस्त्यागः। 'द्विहेतु षडधिष्ठानं षडङ्गं षड्विपाकयुक्। चतुःप्रकारं त्रिविधं त्रिनाशं दानमुच्यते'॥ अस्य विवरणं तेनैवोक्तम्। तत्र द्विहेत्विति। नाल्पत्वं वा 'बहुत्वं वा दानस्याभ्युदयावहम्। श्रद्धा भक्तिश्च दानानां वृद्धिक्षयकरे स्मृते॥ 'श्रद्धा' आस्तिक्यबुद्धिः। स्नेहपूर्वमभिध्यानं 'भक्तिः'। शक्तिरितिपाठे शक्तिरौदार्य्यम्। षडधिष्ठानमिति। 'षड-धिष्ठानानि' आश्रयाः निमित्तत्वेन यस्य तत्तथा। तान्याह।

धर्म्ममर्थञ्च कामञ्च व्रीडाहर्षभयानि च।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते॥

---

* रचाहीकृतजगतीति पाठान्तरम्।

तानि विविनक्ति। पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्।
केवलं त्यागबुद्ध्या यद्धर्म्मदानं तदुच्यते॥
'प्रयोजनमनपेक्ष्य' दृष्टफलाननुसन्धानेनेत्यर्थः।
प्रयोजनमपेक्ष्यैव प्रसङ्गाद्यत्प्रदीयते।
तदर्थदानमित्याहुरैहिकं फलहेतुकम्॥
स्त्री-पान-मृगयाक्षाणां प्रसङ्गाद्यत् प्रदीयते।
अनर्हेषु च रागेण कामदानं तदुच्यते॥
संसदि व्रीड़या स्तुत्याचार्य्योऽर्थिभ्यः प्रयाचितः।
प्रदीयते च तद्दानं व्रीड़ादानमिति स्मृतम्॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षवद्यत्प्रदीयते।
हर्षदानमिति प्राहुर्दानं तद्धर्म्मचिन्तकाः॥
आक्रोशानर्थहिंसानां प्रतीकाराय यद्भवेत्।
दीयते तापकर्त्तृभ्यो भयदानं तदुच्यते॥
षड़ङ्गमिति। दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्म्मयुक्।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः॥
तानि विवृणोति। अपापरोगी धर्म्मात्मा दित्सुरव्यसनः शुचिः।
अनिन्द्याजीवकर्म्मा च षड्भिर्दाता प्रशस्यते॥
'अपापरोगी' राजयक्ष्मादिरोगरहितः।
त्रिशुक्लः क्षमवृत्तिश्च घृणालुः सकलेन्द्रियः।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते॥
त्रिशुक्ल इति।
'त्रीणि' विद्यान्वयवृत्तानि 'शुक्लानि' विशुद्धानि यस्य स तथा।
'घृणालुः' कृपालुः। 'सकलेन्द्रियः' अविकलेन्द्रियः।

सौमुख्याद्यतिसम्प्रीति रर्थिनां दर्शने सदा।
सत्कृतिश्चानसूया च तदा श्रद्धेति कीर्त्त्यते॥
अपराबाधमक्लेशं* प्रयत्नेनार्ज्जितं धनम्।
स्वल्पं वा विपुलं वापि देयमित्यभिधीयते॥
यद्यत्र दुर्लभं भद्रं यस्मिन् कालेऽपि वा पुनः।
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा॥
अवस्था देशकालानां पात्रदात्रोश्च सम्पदा।
हीनं वापि भवेच्छ्रेष्ठं श्रेष्ठं वाप्यन्यथा भवेत्॥

षड्विपाकत्वमाह। दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम्।
षड् विपाकयुगुद्दिष्टं षडेतानि विपाकतः॥

तानि व्याचष्टे। नास्तिक-स्तेन-हिंस्रेभ्यो जाराय पतिताय च।
पिशुन-भ्रूण-हन्तृभ्यां प्रदत्तं दुष्फलं भवेत्॥

'दुष्फलं' विरीतफलम्। महदप्यफलं दानं श्रद्धया परिवर्जितम्।
परबाधाकरं दानं परमप्यूनतां व्रजेत्॥

'निष्फलं' अपक्रष्टफलम्। अत्यन्ताफलत्वे तु यदेव श्रद्धया करोति तदेव वीर्य्यवत्तरं भवतीतीतरार्थोऽनुपपन्नः स्यात् फलवचन-विपाकशब्दविरोधश्च। 'परं' श्रेष्ठम्। 'ऊनत्वञ्च' किञ्चिन्न्यूनता-भिप्रायम्। अन्यथा पूर्व्वेण पौनरुक्त्यप्रसङ्गात्।

यथोक्तमपि यद्दत्तं चित्तेन कलुषेण तु।
तत्तु सङ्कल्पदोषेण दानतुल्यफलं भवेत्॥
युक्ताङ्गैः सकलैः षड्भिर्दानं स्यात् विपुलोदयम्॥

---

* स्वयं तेनार्ज्जितंधनमिति पाठान्तरम्।

अनुक्रोशवशाद्दत्तं दानमक्षयतां व्रजेत्॥

'अनुक्रोशः', दया। चतुःप्रकारमाह।

ध्रुवमाजस्रिकं काम्यं नैमित्तिकमिति क्रमात्।
वैदिको दानमार्गोऽयं चतुर्द्धा वर्ण्यते द्विजैः॥
प्रपा-राम-तड़ागादि सर्व्वकामफलं ध्रुवम्।
तदाजस्रिकमित्याहुर्दीयते यद्दिने दिने॥
अपत्य-विजयैश्वर्य्य-स्त्री-बालार्थं यदिष्यते।
इच्छासंस्थन्तु तद्दानं काम्यमित्यभिधीयते॥
कालापेक्षं क्रियापेक्षमर्थापेक्षमिति स्मृतम्।
त्रिधा नैमित्तिकं प्रोक्तं सहोमं होमवर्जितम्॥

त्रैविध्यमाह। नवोत्तमानि चत्वारि मध्यमानि विधानतः।
अधमानीति शेषाणि त्रिविधत्वमिदं विदुः॥

तदेव विविनक्ति। अन्नं दधि मधुत्राणं गो-भू-रुक्माश्व-हस्तिनः।
दानान्युत्तमदानानि, उत्तमद्रव्यदानतः॥
विद्यादानादनावास-परिभोगौषधानि च।
दानानि मध्यमानीह मध्यमद्रव्यदानतः॥

'परिभोग इति' परिभोगसाधनं खट्वासनादि।

उपानत्-प्रेङ्ख-यानानि छत्रपानासनानि च।
दीप-काष्ठ-फलादीनि चरमं बहुवार्षिकम्॥
बहुत्वादर्थजातानां सङ्ख्या शेषेषु नेष्यते।
अधमान्यवशिष्टानि सर्व्वदानान्यतो विदुः॥

'बहुवार्षिकं' बहूनि वर्षाणि प्राप्तं पुरातनमिति यावत्। एतेनोत्तममपि हस्त्यश्वादि, जीर्णतां प्राप्तमधमं भवति।

विनाशत्वमाह । इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात् ।

श्लाघा-नुशोचनाभ्याञ्च भग्नतेजो विपद्यते ॥

तस्मादात्मकृतं पुण्यं न वृथा परिकीर्त्तयेत् ।

भुक्तवानिति तत्प्राहुस्तमेव कृतवादिनम्* ॥

'श्लाघा' प्रशंसा, 'वृथा' रक्षादिप्रयोजनव्यतिरेकेण ।

कूर्म्मपुराणात् । नित्यं नैमित्तिकं काम्यं विमलञ्चेति कथ्यते

अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे ॥

अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्यकं ।

यत्तु पापोपशान्त्यर्थं दीयते विदुषां करे ॥

नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥

'पापोपशान्त्या इति' नियतनिमित्तोपलक्षणम् ॥

अपत्य-विजयै-श्वर्य्य-स्वर्गार्थं यत्प्रदीयते ।

दानं तत् काम्यमाख्यातमृषिभिर्धर्म्मचिन्तकैः ॥

यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते ।

चेतसा भक्तियुक्तेन दानं तद्विमलं शिवम् ॥

मनुः । येन येन हि भावेन यद्यद्दानं प्रयच्छति ।

तेन तेन हि भावेन तत्प्राप्नोति हि पूजितः ॥

'येन येन हि भावेन' सात्विकराजसादिना ।

तदुक्तं भगवद्गीतासु । दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।

देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम् ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।

दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥

---

* वादिन इति पाठान्तरम् ।

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असंस्कृतमवज्ञातं तत्तामससमुदाहृतम्॥
विष्णुधर्म्मोत्तरात्॥ कृतानि विधिहीनानि वञ्चनार्थं परस्य वा।
क्रोधलोभाभिभूतेन-तामसानि विनिर्दिशेत्॥
सात्विकानि भवन्तीह श्रद्धया परया द्विज।
तामसानां फलं भुङ्क्ते तिर्य्यक्त्वे मानवः सदा॥
वर्णसंस्कारभावेन वार्द्धके यदि वा पुनः।
बाल्ये वा दासभावे वा नात्र कार्य्या विचारणा॥
अतोऽन्यथा तु मानुष्ये राजसानां फलं भवेत्।
सात्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः॥
मत्स्यपुराणात्॥ येषां पूर्वकृतं कर्म सात्विकं मनुजोत्तम।
पौरुषेण विना तेषां केषाञ्चिद्दृश्यते फलम्॥
कर्म्मणा प्राप्यते लोके राजसस्य तथा फलम्।
कृच्छ्रेण कर्म्मणा विद्धि तामसस्य तथा फलम्॥
गारुड़पुराणात्। कायिकं वाचिकं दानं मानसञ्च त्रिधा मतम्।
अर्हते यत्सुवर्णादिदानं तत्कायिकं मतम्॥
आर्त्तानामभयं दद्यौत्यितद्दै वाचिकं स्मृतम्।
विद्ययाख्यायया योगि* तद्दानं मानसं द्विजाः॥
हारीतः। असद्द्रव्यदान-मस्वर्गं,† यच्च दत्वा परितप्यते तद्वृथ-दानमफलं, यच्चोपकारिणे ददाति तन्मात्रं परिक्लिष्टं,‡ यच्च सोपधं

* योगीति पाठान्तरम्।
† असद्द्रव्यप्रदाने न स्वर्गमिति वा पाठः।
‡ परिक्लिष्टमिति क्वचित्पाठः।

ददाति अभ्याचित * मल्पफलं, यश्चापात्राय ददाति अनिष्टदानं भवति, यच्च दत्त्वा परिकीर्त्तते यच्च भयदानं भातुरं, यच्चाश्रद्धया ददाति-क्रोधाद्राक्षसम्, यश्चाक्रुश्य ददाति दत्त्वा च क्रोशति असत्कृतं पैशाचं, यच्चावज्ञातं ददाति दत्त्वाचावजानीते मुमूर्षोस्तामसं यच्चाप्राकृतो ददाति, एते दानोपसर्गा यैरुपसृष्टं दानं असिद्धं†मसम्बद्ध-मस्वर्ग-मयशस्य-मध्रुव-मफलं वा। ‡ तद्धिदानम्, तस्मिन्नेव संकल्पकाले दीयमानद्रव्यासमर्पणम्। उपकारिणे, § प्रत्युपकारसमीहयेत्यर्थः। 'तन्मात्रं' यावद्दत्तं तावन्मात्रं। 'सोपधं' स्नेहाद्युपाधिसहितं, अभ्याचितम्, लोकप्रतिपत्त्यर्थं ख्यापितम्। 'अनिष्टदानं' शत्रवे दानं, भयदानं, मादृशोऽन्योदाता नास्तीत्येवम्विधो भावविशेषः स्मयः, तेन यद्दानं। अप्राकृतः, मत्तादिः।

भविष्यपुराणे॥　महादानानि वै विद्यादतिदानानि सर्वदा।
पुण्यमिष्टञ्च पूर्त्तञ्च तथा दानञ्च यत्नतः॥
'महादानानि' वक्ष्यमाणानि षोड़श तुलापुरुषादीनि।
कनकाश्वतिलानागा दासीरथमहीगृहाः।
कन्याच कपिला धेनुर्महादानानि वै दश॥

सामवेदोपनिषदि। त्रीण्याहु रतिदानानि गावः पृथ्वी सरस्वती।
नरकादुद्धरन्त्येव जपवापनदोहनात्॥

शङ्खः। इष्टिभिः पशुबन्धैश्च चातुर्मास्यैर्यजेत्तु यः।

---

* अल्पमाचितमिति वा पाठः।

† अप्रसिद्धमिति क्वचित् पाठः।

‡ तर्हिंत्वायामन्तरकाले द्रव्यार्पणसम्बन्धेनादान मसमर्पणमितिवा पाठः।

§ अन्योपकारिणे इति पाठान्तरम्।

अग्निष्टोमादिभिर्यज्ञैर्यजेत च स इष्टवान् ॥
अग्निहोत्रं तपः सत्यं वेदानाञ्चैव पालनम् ।
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥
एकाग्निकादौ यत्कर्म्म त्रेतायां यच्च हूयते ।
अन्तर्वेद्याञ्च यद्दानं इष्टं तदभिधीयते ॥

मनुः । रोगिणां परिचर्य्या च पूर्त्तमित्यभिनिर्द्दिशेत् ।

व्यासः । पुष्करिण्य स्तथावाप्यो, देवतायतनानि च ।
अन्नदानमथारामाः पूर्त्तमित्यभिधीयते ॥

नारदः ॥ ग्रहोपरागे यद्दानं सूर्य्यसंक्रमणेषु च ।
द्वादश्यादौ तु यद्दानं तदेतत् पूर्त्तमुच्यते ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवस्य समस्तकरणा
धीश्वरसकलविद्याविशारद-श्रीहेमाद्रिविरचिते
चतुर्वर्गचिन्तामणौ दानखण्डे दानस्वरूप-
प्रकरणम् ॥ २ ॥

---

# तृतीयोऽध्यायः ।

---

अथ दानाङ्गनिरूपणम् ।

तानि च द्रव्य-काल-श्रद्धा-संज्ञकानि ।

तदुक्तं भविष्यपुराणे । प्रतिग्रहीता द्रव्यञ्च कालो देशश्च पावनः ।
श्रद्धा च सात्त्विकी ज्ञेयं दानाना-मङ्गपञ्चकं ॥

तत्र पात्रनिरूपणम् ।

स्कन्दपुराणे देवीं प्रति ईश्वरवचनं ।

श्रुतीनामाकराश्चैते रत्नानामिव सागराः ।
विप्रा विप्राधिपमुखे पूजनीयाः प्रयत्नतः ॥

विप्राधिपः, चन्द्रः तद्वन्मुखं यस्याः सा तथा देवीसम्बोधनमेतत् ।

यत्र वेदविदो विप्रा न प्राश्नन्त्युत्तमं हविः ।
न तत्र देवा देवेशि हविरश्नन्ति कर्हिचित् ॥

तथाच तैत्तिरीयश्रुतिः । यावतीर्वै देवता स्ताः सर्व्वा वेद-
विदि ब्राह्मणे वसन्तीत्यादि ।

वियदित्युच्यते व्योम, प्रकारः प्रापणे स्मृतः ।
दिवं सम्प्रापयन्त्येते दातृन् विप्रास्ततः स्मृताः ॥
अपि नारायणोऽनन्तो ब्रह्मा स्कन्दोऽनिलः शिखी ।
तत्स्थानं नाभिनन्दन्ति यत्र विप्रा न पूजिताः ॥
येषां प्रसादस्सुलभ-मायु-र्धर्म्मः सुखं धनम् ।
श्री-र्यशः-स्वर्गवासश्च तान् विप्रानर्च्चयेद्बुधः ॥

विष्णुधर्म्मोत्तरे श्रीभगवानुवाच ।

ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः।
निर्भर्त्सितैश्च निर्भर्त्स्ये तैरहं सर्व्वकर्म्मसु॥
विप्राः परा गतिर्म्मह्यं यस्तान् पूजयते नृप।
तमहं स्वेन रूपेण प्रपश्यामि युधिष्ठिर॥
काणाः कुण्ठाश्च षण्ढाश्च दरिद्रा व्याधिताश्च ये।
एवंरूपाश्च ये विप्राः पश्य रूपं ममैव ते॥

एतत्तु ब्राह्मणजातिमात्रस्तुतिपरं।

याज्ञवल्क्यः। तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये।
तृप्त्यर्थं पितृदेवानां धर्म्मसंरक्षणाय च॥

मत्स्यः। नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः।
नास्ति विप्रात्परः बन्धुर्नास्ति विप्रात्परो विधिः॥

वह्निपुराणात्। न जाति र्न कुलं राजन् न स्वाध्यायः श्रुतं न च।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणं॥
किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः।
कृमयः किं नजायन्ते कुसुमेषु सुगन्धिषु॥
नैकमेकान्ततो ग्राह्यं पठनं हि विशाम्पते।
वृत्तमन्विष्यतां तात रक्षोभिः किं न पठ्यते॥
बहुना किमधीतेन नटस्येव दुरात्मनः।
तेनाधीतं श्रुतंवापि यः क्रियामनुतिष्ठति॥
कपालस्थं यथा तोयं श्वदृते च यथा पयः।
दूष्यं स्यात् स्थानदोषेण, वृत्तहीनं तथा श्रुतम्॥
तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणम्।
चतुर्व्वेदोपि दुर्व्वृत्तः शूद्रादल्पतरः स्मृतः॥

सत्यं दम-स्तपोदान-महिंसेन्द्रियनिग्रहः ।
दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ॥

वशिष्ठः । यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥

सन्, विशिष्टः, असन्, तद्विपरीतः । अत्र चात्मोत्कर्षप्रकाशनं यो न करोति स पात्रमिति तात्पर्य्यमिति ।

यमः । अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ।
स्वदारनिरतो दाता स वै ब्राह्मण उच्यते ॥
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असम्भिन्नार्य्यमर्य्यादः स वै ब्राह्मण उच्यते ॥
आशिषोऽर्थार्थं-पूजाश्च प्रसङ्गान्नकरोति यः ।
निवृत्तो लोभमोहाभ्यां तं देवा ब्राह्मणं विदुः ॥

'आशिषः' आशीर्व्वादान्,-'अर्थार्थं' धनलाभाय । 'प्रसङ्गः' अत्यासक्तिः ।

सत्यं दानं क्षमा शीलं आनृशंस्यं दया घृणा ।
दृश्यन्ते यत्र लोकेऽस्मिं स्तं देवा ब्राह्मणं विदुः ॥

यमशातातपौ । तपोधर्म्मौ दया दानं सत्यं शौचं श्रुतं घृणा ।
विद्या-विज्ञान-मास्तिक्य-मेतद्ब्राह्मणलक्षणम् ॥

बौधायनः । विद्या तपश्च योनिश्च एतद्ब्राह्मणलक्षणं ।
विद्या तपोभ्यां योहीनो जातिब्राह्मण एव सः ॥

वशिष्ठः । ये क्षान्तदान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः ।
प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥

यमः। विद्यावन्तश्च ये विप्राः सुव्रताश्च तपस्विनः।
सत्य-संयम-संयुक्ता ध्यानयुक्ता जितेन्द्रियाः॥
पुनन्ति दर्शनं प्राप्ताः किं पुनः संगतिं मताः।
तेषां दत्त्वाच भुक्त्वा च प्राप्नुयुः परमां गतिम्॥
दत्त्वा द्विजाय शुद्धाय दाता याति शुभां गतिम्।
विद्यातपःशीलवांश्च स च तारयते नरः॥
कूर्म्मपुराणे॥ स्वाध्यायवन्तो ये विप्रा विद्यावन्तोजितेन्द्रियाः।
सत्यसंयमयुक्ताश्च तेभ्यो दद्यात् द्विजोत्तमाः॥
श्रोत्रियाय कुलीनाय विनीताय तपस्विने।
व्रतस्थाय दरिद्राय प्रदेयं शक्तिपूर्वकम्॥
सम्वर्त्तः। श्रोत्रियाय दरिद्राय अर्थिने च विशेषतः!
यद्दानं दीयते तस्मै तद्दानं शुभकारकम्॥
श्रोत्रियस्तु, यमेनोक्तः।
ओंकारपूर्व्विकास्तिस्रः सावित्रीर्य्यश्च विन्दति।
चरितब्रह्मचर्य्यश्च सवै श्रोत्रिय उच्यते॥
ओंकारपूर्व्विका, महाव्याहृतीरिति शेषः।
याज्ञवल्क्यः। सर्व्वस्य प्रभवोविप्रा श्रुताध्ययनशालिनः॥
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः।
पद्मपुराणे। यथाहि सर्वदेवानां ज्येष्ठः श्रेष्ठः पितामहः॥
तथा ज्ञानी सदा पूज्यो निर्म्ममोनिष्परिग्रहः॥
मत्स्यपुराणे। शीलं संवसता ज्ञेयं शौचं संव्यवहारतः।
प्रज्ञा संकथनात्ज्ञेया त्रिभिः पात्रं परीक्ष्यते॥
भविष्यपुराणे। क्षान्ति-स्पृहा-दया-सत्यं-दानं शीलं तपः श्रुतम्।

एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणम् ॥

वशिष्ठः । स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञं । स्त्रीषु क्षान्तं धार्म्मिकं गोशरण्यं व्रतैः क्षान्तं तादृशं पात्रमाहुः ॥ 'योनिमान्' प्रशस्तकुलोद्भवः । 'वैतानस्थः' अग्नि-होत्रादिकर्म्मपरः । 'स्त्रीषु क्षान्तः' स्त्रीविषये क्षान्तः । 'गोश-रण्यः', गोशुश्रूषारतः ।

यमः । विद्यायुक्तो धर्म्मशीलः प्रशान्तः क्षान्तोदान्तः सत्यवादी कृतज्ञः । वृत्तिग्लानो गोहितो गोशरण्यो दाता यज्वा ब्राह्मणः पात्रमाहुः ॥

स्वाध्यायवान् नियमवांस्तपस्वी ध्यानविच्च यः ।

क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते ॥

महाभारते । साङ्गांस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभः ।

षड्भ्योऽनिवृत्तः कर्म्मभ्यस्तं पात्रमृषयोविदुः ॥

'पात्रं, पात्रतममित्यर्थः ।

वशिष्ठः । किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ।

पात्राणामपि तत् पात्रं शूद्रान्नं यस्य नोदरे ॥

बृहस्पतिः । किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ।

आगमिष्यति यत् पात्रं तत्पात्रं तारयिष्यति ॥

ब्रह्मचारी भवेत्पात्रं पात्रं वेदस्य पारगः ।

पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥

व्यासः । किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ।

असङ्कीर्णं च यत्पात्रं तत्पात्रं तारयिष्यति ॥

'असङ्कीर्णं, योन्यादिसङ्कररहितम् ।

याज्ञवल्क्यः। न विद्यया केवलया तपसा वापि पात्रता।
यत्र वृत्त मिमे चोभे तद्धि पात्रं प्रकीर्त्तितम्॥

देवलः। मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परः।
अनूचानस्तथा भ्रूण-ऋषिकल्प-ऋषि-र्मुनिः॥
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ।
तेषां परः परः श्रेष्ठो विद्या-वृत्त-विशेषतः॥
ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत्।
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते॥

'अनुपेतः, उपनयनरहितः।

एकदेशमतिक्रम्य वेदस्याचारवानृजुः।
स ब्राह्मण इति प्रोक्तो निभृतः सत्यवाग्घृणी॥

'एकदेशातिक्रमः, वेदस्य किञ्चिदूनस्याध्ययनम्।
'निभृतः, शान्तः।

एकां शाखां सकल्पाम्वा षड्भिरङ्गैरधीत्य वा।
षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित्॥
वेद-वेदाङ्ग-तत्त्वज्ञः शुद्धात्मा पापवर्जितः।
शेषं श्रोत्रियवत् प्राप्तः सोऽनूचान इति स्मृतः॥
अनूचानगुणोपेतो यज्ञ-स्वाध्यायमन्त्रितः।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः॥
वैदिकं लौकिकञ्चैव सर्वं ज्ञान-मवाप्य यः।
आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः॥

'लौकिकम्, अर्थार्जनादिज्ञानम्।

ऊर्द्धरेतास्तपस्युग्रे नियताशी न संशयी।

आपा-शुश्रयोः शक्तः सत्यसन्धो भविष्यति॥
निवृत्तः सर्वतस्त्वग्नः कामक्रोधविवर्जितः।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो-मुनिः॥
'निवृत्तः' निषिद्धकाम्यकर्मभ्यः। 'निष्क्रियः', अर्थार्जनादि-क्रियारहितः।
एवमन्वय-विद्याभ्यां वृत्तेन च समुच्छ्रिताः।
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु॥
'सवनादिषु' यज्ञादिषु।
प्रतिग्रहसमर्थोऽपि कृत्वा विप्रो यथाविधि।
निस्तारयति दातारमात्मानञ्च स्वतेजसा॥
'समर्थोऽपि, समर्थएवेत्यर्थः।
न लोके ब्राह्मणेभ्योऽन्यत् पवित्रं पुण्यमेव वा।
अग्रश्च द्विजेन्द्राणां नास्ति वृत्तवतामिति॥
योऽभ्यो हव्य-कव्येषु ब्रह्मणो ब्राह्मणो द्विजैः।
अभिभूतश्च पूर्व्वोक्तैर्दोषैः स्पृष्टश्च नेष्यते॥
'अभिभूतः, अपकृष्टः।
'पूर्व्वोक्तैः, कुलविद्याचारैः। 'दोषैः, उपपातकादिभिः॥
मनुः। पात्रस्य हि विशेषेण श्रद्दधानस्तथैव च।
अल्पम्वा बहु वा प्रेत्य दानस्य प्राप्यते फलम्॥
दक्षः। सम-द्विगुण-साहस्र-मनन्तञ्च यथाक्रमम्।
दाने फलविशेषःस्याद्धिंसायामेव मेव हि॥
शतमब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।
सहस्रगुणमाचार्य्ये अनन्तं वेदपारगे॥

'अब्राह्मणः, राजभृतादिः।

यदाह शातातपः।

अब्राह्मणास्तु षट् प्रोक्ता ऋषिः शातातपोऽब्रवीत्।
आद्योराजभृतस्तेषां द्वितीयः क्रयविक्रयी॥
तृतीयो बहुयाज्यः स्यात् चतुर्थो ग्रामयाजकः।
बहवो याज्या यस्य स बहुयाज्यः।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य वा॥
ग्रामस्य नगरस्य भृत इत्यन्वयः।
अनागतान्तु यः पूर्वां सादित्याञ्चैव पश्चिमाम्।
नोपासीत द्विजःसन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः॥
'ब्राह्मणब्रुवस्तु, पुरस्तादपात्रेषु व्याख्यास्यते।

आचार्य्यस्तु महाभारते।

अध्यापयेत्तु यः शिष्यं कृतोपनयनं द्विजः।
सरहस्यञ्च सकलं वेदं भरतसत्तम॥
तमाचार्य्यं महावाहो प्रवदन्ति मनीषिणः।
एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः॥
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते।
निषेकादीनि कर्म्माणि यः करोति नृपोत्तम॥
सम्भावयति चान्नेन स विप्रोगुरुरुच्यते।
अग्न्याधेयं पाकयज्ञा*नग्निष्टोमादिकं यथा॥
यः करोति वृतो†नूनं स तु स्यादृत्विजो द्विजः।

---

* अग्निष्टोमादिकान् मखानिति क्वचित् पाठः।
† यस्य मतस्त्वृत्विगिहोच्यते इति क्वचित् पाठः।

यमः। सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे॥
प्राधीते शतसाहस्रमनन्तं वेदपारगे।
'प्राधीतः,' प्रारब्धाध्ययनः।
उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्याञ्च स भवेद्वेदपारगः॥
बृहस्पतिः। शूद्रे समगुणं दानं वैश्ये तु द्विगुणं स्मृतम्।
क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम॥
श्रोत्रिये चैव साहस्रमाचार्य्ये द्विगुणं ततः।
आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणि॥
विष्णुधर्म्मोत्तरे। अमानुषे समं दानं गोषु ज्ञेयं फलं तथा।
द्विगुणञ्च तदेवोक्तं तथा चैवर्णसङ्करे॥
शूद्रे चतुर्गुणं प्रोक्तं विशि चाष्टगुणं भवेत्।
क्षत्रिये षोड़शगुणं ब्रह्मबन्धौ तदेव तु॥
द्वात्रिंशद्गुणं स्मृतं दानं वेदाध्ययनतत्परे।
शतघ्नं तद्विनिर्दिष्टं प्राधीते लक्षसम्मितम्॥
अनन्तञ्च तदेवोक्तं ब्राह्मणे वेदपारगे।
एतेषु, केषाञ्चिद्ब्राह्मणब्राह्मणब्रुवादीनामपात्राणामपि पात्रत्वनिरूपणं मन्त्रवद्गवादिदानव्यतिरिक्तदानविषयम्।
मन्त्रपूर्वञ्च यद्दानमपात्राय प्रदीयते दातुर्निकृत्य हस्तं तद्भोक्तुर्जिह्वां निकृन्तति
शातातपवचनात्। उपरुदन्ति दातारं गौरश्वः काञ्चनं क्षितिः।
अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृते-
रिति वशिष्ठवचनाच्च। मन्त्रपूर्व्वं गवादिदानानामपात्रप्रति-

पादकानिषेधात् शूद्रादीनान्तु पात्रत्वनिरूपणम् अन्नदानविष-
यम्। कृतान्नमितरेभ्य इतिगौतमवचनात्। अन्नं सर्व्वत्र
दातव्यमितिवक्ष्यमाणत्वाच्च।

दक्षः। व्यसनापद्दणार्थञ्च कुटुम्बार्थञ्च याचते।
एवमन्विष्य दातव्यं सर्वदानेष्वयं विधिः॥
व्यसनं, राजचौराद्युपद्रवः।

'आपत्, दुर्भिक्षादिपीड़ा। 'आद्योऽर्थशब्दो, निवृत्तिवचनः।

मनुः। सान्तानिकं यक्ष्यमाणमध्वगं सार्व्ववेदसम्।
गुर्व्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः॥
नवैतान् स्नातकान् विद्याद् ब्राह्मणान् धर्म्मभिक्षुकान्॥
'सान्तानिकः, सन्तानप्रयोजनविवाहार्थीत्यर्थः।
'अध्वगः' अत्र धर्म्मार्थं प्रचलितः।
(सार्व्ववेदसः) सर्व्वस्वदक्षिणयज्ञकृत्।
'उपतापी, व्याधिपीड़ितः।

निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः। एतेभ्यो हि द्विजा-
ग्रेभ्यो देयमन्नं सदक्षिणम् इतरेभ्यो बहिर्व्वेदिकृतान्नन्तु विधीयते॥
'विद्याविशेषत' इति, अल्पविद्याय अल्पं बहुविद्याय बह्वित्यर्थः।

बौधायनः। सुब्राह्मण-श्रोत्रिय-वेदपारगेभ्यो गुर्व्वर्थ-निवेशौष-
धार्थ-वृत्तिक्षीण-यक्ष्यमाणाध्ययनाध्वसंयोग-वैश्वजितेषु द्रव्यविभागो
यथाशक्ति कार्य्यो बहिर्व्वेदि भिक्षमानेषु कृतान्नमितरेषु॥ निवेशः,
विवाहः। 'वैश्वजितः, सर्व्वस्वदक्षिणया कृतविश्वजिद्यागः। बहि-
र्वेदिग्रहणादेतेभ्यो वहिर्वेद्यपि धनमवश्यं देयम् अन्येभ्यस्तु अन्त-
र्वेद्येव धनदाननियमः। वहिर्वेदि तु कृतान्नस्यैव।

आपस्तम्बः। भिचमाणो निमित्त-माचार्य्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षार्हतश्च नियमादिलोपः। तत्र, गुणान् समीक्ष्य यथा देयं, इन्द्रिय-प्रीत्यर्थस्य तु भिचमाणमनिमित्तं न तथाद्रियेत। 'बुभूर्षा, भरणेच्छा॥ अर्हतश्च नियमादिलोप इति, अधिकारिण-आवश्यककर्म्मविधिलोपप्रसङ्गः।

यमः। वेदेश्वनसम्बद्धेषु हुतं विप्रमुखाग्निषु। सन्तारयति दातारं महतः किल्बिषादपि॥

पद्मपुराणे। एकं वेदान्तगं विप्रं भोजयेत् श्रद्धयान्वितः।
तस्य भुक्ता स वै कोटिविप्राणां नात्र संशयः॥

शातातपः। वेदपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत्।
न तु मूर्खं निराहारं षड्रात्रमुपवासिनं॥

व्यासः। यत्सिक्थं वेदविद्भुङ्क्ते षट्कर्म्मनिरतः शुचिः।
दातुः फलमसंख्येयं जन्म जन्म तदक्षयम्॥
वेद-विद्या-व्रत-स्नाते श्रोत्रिये गृहमागते।
क्रीड़न्त्योषधयः सर्व्वा यास्यामः परमां गतिम्॥

'ओषधयः, अन्नानि।

महाभारते। तद्भक्तास्तद्धना-राजंस्तद्गृहा-स्तदपाश्रयाः।
अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम्॥
(अत्र) तच्छब्देन पूर्व्वोक्ताः पितरो देवताश्च परामृश्यन्ते।
अथवा, तदेव दीयमानं भक्तमदनीयं येषां ते तथा एवं तद्धनादिशब्दा अपि।
तस्करेभ्यः परेभ्यो वा ये भयार्त्ता युधिष्ठिर।
अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम्॥

हृतस्वा-हृतदाराश्च ये विप्रा देशसंप्लवे।
अर्थार्थमभिगच्छन्ति तेषु दत्तं महाफलम्॥
चारित्रनियता राजन् ये कृशाः कृशवृत्तयः।
अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम्॥
अव्युत्क्रान्ताः स्वधर्मेषु पाषण्डसमयेषु च।
कृशप्राणाः कृशाहारास्तेषु दत्तं महाफलम्॥
तपस्विनस्तपोनिष्ठास्तथा भैक्षचराश्च ये।
अर्थिनः किञ्चिदिच्छन्ति तेषां दत्तं महाफलम्॥

आदित्यपुराणात्। अक्रोधना धर्मपराः शान्ता-दमदमे रताः।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम्॥
हृतसर्वस्वहरणा-निर्दोषा-प्रभविष्णुभिः।
स्पृहयन्ति सुभक्तानां तेषु दत्तं महाफलम्॥

अथ शातातपपराशरौ।

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।
भोजने चैव दाने च दहत्यासप्तमं कुलम्॥

भविष्यपुराणे।

यस्त्वासन्न मतिक्रम्य ब्राह्मणं पतिताद्दृते।
दूरस्थं भोजयेन्मूढ़ो गुणाढ्यं नरकं व्रजेत्।
तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेश्मिकान्॥
'प्रातिवेश्मिकान, स्वगृहाददूरवर्त्तिगृहान्।
सम्बन्धिनस्तथा सर्व्वान् दौहित्रं विट्पतिं तथा।
भागिनेयं विशेषेण तथा बन्धून् गृहाधिप॥
नातिक्रमेन्नरस्त्वेतान् सुमूर्खानपि गोपते।

अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत् ॥

'विट्पतिः', जामाता ।

'सुमूर्खानपि नातिक्रमेदित्येतत्, अन्नदानविषयम् ।

'हिरण्यादिदाने तु' सन्निहितमूर्खव्यतिक्रमे दोषाभावात् ।

तदुक्तं व्यास-वशिष्ठ-बोधायन-शातातप-पराशरैः ।

यस्य चैको गृहे मूर्खो दूरे चापि बहुश्रुतः ।

बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।

ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥

महाभारते । यदि स्यादधिको विप्रो दूरे वृत्तादिभिर्युतः ।

तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधिम् ॥

विष्णुः । पुरोहितस्यात्मन एव पात्रं स्वसृ-दुहितृ-पुत्रजामातरश्चेति ।

'यस्यैते पुरोहितादयः, तस्यैव ते अन्यगुणरहिता

अपि पुरोहितादित्वेनैव पात्राणि ।

व्यासः । मातापितृषु यद्दत्तं भ्रातृषु स्वसृतासु च ।

जायापत्योस्तु यद्दत्तं * सोऽनिन्द्यः स्वर्गसंक्रमः ॥

पितुः शतगुणं दानं सहस्रं मातुरुच्यते ।

अनन्तं दुहितुर्दानं सोदर्ये दत्तमक्षयम् ॥

विष्णुधर्मोत्तरात् ।

आत्मनस्तु भवेत् पात्रं नान्यस्य स्यात् पुरोहितः ।

पुरोहिते तु स्वे दत्तं दानमक्षय्यमुच्यते ॥

उपाध्याय-त्विंजोश्चैव गुरावपि च मानवैः ।

* सोऽनन्तस्वर्गसंक्रम इति पाठान्तरम् ।

वर्णापेक्षा न कर्त्तव्या मातरं पितरं प्रति ॥

'उपाध्यायादयस्तु, पूर्व्वमेव व्याख्याताः।

तथा। मातृष्वसा स्वसा चैव तथैव च पितृष्वसा।

मातामही भागिनेयी भागिनेयस्तथैव च ॥

दौहित्री-विट्पतिश्चैव तेषु दत्तञ्च अक्षयम्।

श्रोत्रिये ग्रस्तथा दत्तं तदप्यक्षयमुच्यते ॥

माता-पित्रोर्गुरौ मित्रे विनीते चोपकारिणि।

दीना-नाथ-विशिष्टेभ्यो दातव्यं भूतिमिच्छता ॥

अदत्तदानाज्जायन्ते परभाग्योपजीविनः ॥

'उपकारिणि' परोपकारपरे।

'विशिष्टाः' गुणातिशयशालिनः।

ब्रह्मपुराणे। यत् कन्यासु पिता कुर्य्याद्दानं पूजनमर्च्चनम्।

यत्कृतं सुकृतं विद्यात्तासु दत्तं तदक्षयम्।

यद्दत्तं तासु कन्यासु तद्दानं पुण्यमेव च ॥

कालिकापुराणात्। यद्दत्तं वेदविद्विप्रे यद्दत्तं ब्रह्मचारिणि।

तपोनिधिस्तु यद्दत्तं कारुण्येन च यत् सदा।

तत् सर्व्वमक्षयं दानं वैमल्येन विधाय यत् ॥

विष्णुधर्म्मोत्तरात्। अन्नदाने न कर्त्तव्यं पात्रापेक्षणमण्वपि।

अन्नं सर्व्वत्र दातव्यं धर्म्मकामेन वै द्विज ॥

सदोषेऽपि तु निर्द्दोषं सगुणेऽपि गुणावहम्।

तस्मात् सर्व्वप्रयत्नेन देयमन्नं सदैव तु ॥

विद्या-ध्ययनसक्तानामन्नदानं महाफलम् ॥

तथा। दत्त्वा नृपतिभीतानां धनिनाञ्च तथा धनम्।

तस्करेभ्यश्च भीतानां फलमक्षयमुच्यते ॥
धियचतां तथा दत्तं व्यसनं तर्त्तुमिच्छताम् ।
दुःखान्वितानां दीनानामक्षयं परिकीर्त्तितम् ॥
विवाह-मौञ्जलाबन्ध-प्रतिष्ठादिषु कर्म्मसु ।
आपन्नेषु तु यद्दत्तमक्षयं तदुदाहृतम् ॥

सम्बर्त्तः । दानान्येतानि देयानि तथान्यानि च सर्व्वशः ।
दीना-न्ध-कृपणा-र्थिभ्यः श्रेयःकामेन धीमता ॥

पद्मपुराणे । दीना-न्ध-कृपणा-नाथ-वाग्विहीनेषु यत्तथा ।
विकलेषु तथान्येषु जड़-वामन-पङ्गुषु ।
रोगार्त्तेषु च यद्दत्तं तत्स्याद्बहुफलं धनम् ॥

अथ अपात्रनिरूपणम् ।

तत्रमनुः । गोरक्षकान् वाणिजकां स्तथा कारु-कुशीलवान् ।
प्रेष्यान्वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥
ये व्यपेताः स्वकर्म्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥
नाट्यमाश्रयो भवति नवविप्र कुशीलवः ।
न शूद्रप्रेषणं कुर्व्वन्नस्तेनो न चिकित्सकः ॥
अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदोहि सः ॥

वसिष्ठः । उदक्याम्वासते येषां येच केचिदनग्नयः ।
कुलञ्चाश्रोत्रियं येषां सर्व्वे ते शूद्रधर्म्मिणः ॥
'अन्वासते' कर्म्मकाले समीप एव तिष्ठति ।

विष्णुः । नाटनं यशसे दद्यान्नभयान्नोपकारिणि ।

न नृत्य-गीतशीलेभ्यो धर्म्मार्थमिति निश्चयः॥

'उपकारिणि, आत्मोपकारपरे-प्रत्युपकारसमीहयेत्यर्थः।

महाभारते। यस्तु प्रेष्यान् द्विजान् मूढ़ो योजयेद्धव्य-कव्ययोः।

न भवेत्तत्फलं तस्य वैदिकीयं-तथा श्रुतिः॥

यमः। अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।

नैषां प्रतिग्रहोदेयो न शिलातारयेच्छिलाम्॥

अपविद्धा-न्निहीनस्य गुरोर्व्विप्रियकारिणः।

द्रविणं नैव दातव्यं सततं पापकर्म्मणः॥

न प्रतिग्रहमर्हन्ति वृषला-ध्यापका द्विजाः।

शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः॥

तथा। राजधानी तथा शून्या यथा कूपश्च निर्जलः।

यथा हुतमनग्नौ च तथा दत्तं द्विजेऽनृचे॥

वसिष्ठः। यथा काष्ठमयो हस्ती* यथा चर्म्ममयो मृगः।

यश्च विप्रोऽनधीयानस्त्रयस्ते† नामधारकाः॥

विद्वद्भोज्यान्यविद्वांसो येषु राष्ट्रेषु भुञ्जते।

तान्यनावृष्टिमिच्छन्ति महद्वा जायते भयम्॥

व्यास-शातातपौ। नष्टशौचे व्रतभ्रष्टे विप्रे वेद-विवर्जिते।

रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम्॥

शौचहीनास्तु ये विप्रा न च यज्ञोपवीतिनः।

हुतं दत्तं तपस्तेषां नश्यत्यत्र न संशयः॥

---

* चर्मेति क्वचित्पाठः।

† नाम बिभ्रतीति क्वचित्पाठः।

अपरे वापि तं बीजं यद्व भस्मनि हूयते ।
क्रियाहीनेषु यद्दत्तं विषु नाशोविधीयते ॥
प्रस्तरे पतितं बीजं भिन्नभाण्डेष दोहनम ।
भस्मन्यपि हुतं द्रव्यं तद्दानमसाधुषु ॥

'पूर्व्वत्र पात्रगुणकथने कृतेऽपि' पुनर्दोषवचनमेवंविधदोष-भाग्जनप्रतिषेधार्थम् ।

मनुः । पात्रभूतो हि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुञ्जीत तस्य देयं न किञ्चन ॥
सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्म्मार्थं नोपयुङ्क्ते यो न तं तस्करमर्च्चयेत् ॥
'असत्सु, निषिद्धेषु द्यूतादिषु ।

दक्षः । विधिहीने तथापात्रे योददाति प्रतिग्रहम् ।
न केवलं हि तद्याति शेषमप्यस्य नश्यति ॥

मनुः । अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हा-नर्हापरिज्ञानाद्दानाद्धर्म्माच्च हीयते ॥

यमः । यस्तु निष्ठाचुरतां वृत्तिमलिङ्गिभ्यः प्रयच्छति ।
घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः ॥

भविष्यपुराणे । नाब्राह्मणाय दातव्यं नदेयं ब्राह्मणाक्रिये ।
न ब्राह्मणब्रुवे चैव न च दुर्ब्राह्मणे धनम् ॥

व्यासः । ब्रह्मबीजसमुत्पन्नो मन्त्र-संस्कार-वर्ज्जितः ।
जातिमात्रोपजीवो च भवेद्ब्राह्मणः स तु ॥
गर्भाधानादिभिर्युक्तस्तथोपनयनेन च ।
न कर्म्मविन्नचाधीते स भवेद्ब्राह्मणाक्रियः ॥

वाराहपुराणे। अव्रती वैश्य-राजन्यौ शूद्रश्चाब्राह्मणास्त्रयः।
वेद-व्रतविहीनश्च ब्राह्मणो ब्राह्मणब्रुवः॥

यमः। यस्य विद्या वेदौ च विच्छिद्येते त्रिपौरुषम्।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः॥

कूर्म्मपुराणे। न वार्य्यपि प्रयच्छेत नास्तिके हैतुकेऽपि वा।
न पाषण्डिषु सर्व्वेषु नावेदविदि धर्म्मवित्॥
'नास्तिकः', परलोकवासनाशून्यः।
'हैतुकः', हेतुभिः परलोकं निराकरिष्णुः।

मनुविष्णू च। न वार्य्यपि प्रयच्छेत वैड़ालव्रतिके द्विजे।
नवकव्रतिके पापे नावेदविदि धर्म्मवित्॥
त्रिष्वप्येतेषु दत्तं हि विधिनोपार्जितं धनम्।
दातुर्भवत्यनर्थाय परत्रादातुरेव च॥
'अनर्थः', प्रत्यवायः।
यथा प्लवेनोपलेन निमज्जत्युदके तरन्।
दातृ-प्रतिग्रहीतारौ तथैवाज्ञौ निमज्जतः॥

यमः। यः कारणं पुरस्कृत्य व्रतचर्य्यां निषेवते।
पापं व्रतेन प्रच्छाद्य वैड़ालं नाम तद्व्रतम्॥
अर्थञ्च विपुलं गृह्य दत्वा लिङ्गं विवर्ज्जयेत्।
आश्रमान्तरितं रक्षेद्वैड़ालं नाम तद्व्रतम्॥
यतीनामाश्रमं गत्वा प्रत्यवस्येत्तु यः पुनः।
यतिधर्म्मविलोपेन वैड़ालं नाम तद्व्रतम्॥

विष्णुः। धर्म्मवर्ज्जी सदालुब्धः* शूद्रिको लोकदम्भकः।

* छाद्मिक इति क्वचित्पाठः।

वैड़ालव्रतिको ज्ञेयो हिंस्रः सर्व्वाभिसन्धकः॥
यस्य धर्म्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः।
प्रच्छन्नानि च पापानि वैड़ालं नाम तद्व्रतम्॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः।
शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः॥
ये बकव्रतिनो विप्रा ये च मार्ज्जारलिङ्गिनः।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्म्मणा॥
चतुर्व्विंशतिमतात्।
रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम्।
अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः॥
कात्यायनस्त्वन्यथाह।
यः स्वाध्याया-ग्निमालः स्याद्देवादीन्नैभिरिष्टवान्।
निराकर्त्तामरादीनां स विज्ञेयो निराकृतिरिति॥
शातातपः। नेष्टं देवलके दत्तमप्रतिष्ठञ्च वार्द्धुषौ।
यच्च वाणिज्यके दत्तं न च तत्प्रेत्य नो इह॥
दक्षः। धूर्त्ते बन्दिनि मल्ले च कुवैद्ये कितवे शठे।
चाट-चारण-चौरेभ्यो दत्तं भवति निष्फलम्॥
स्कन्दपुराणे। देव-पितृ-विहीने यदीश्वरेभ्यश्च दीयते।
दत्त्वा तु कीर्त्तितं यच्च वेदाग्नित्यागिने तथा॥
अन्यायो-पार्ज्जित-धनैर्दत्तमब्राह्मणे च यत्।
गुरवेऽकृतवृत्ते च स्तेनाय पतिताय च॥
कृतघ्नाय च यद्दत्तं सर्व्वदा ब्रह्मविद्विषे।
याजकाय च सर्व्वस्य वृषल्याः पतये तथा॥

परिचाराय भृत्याय सर्व्वस्य पिशुनाय च।
इत्येतानि च राजेन्द्र वृथादानानि षोड़श॥
गर्भस्थोऽज्ञानवालोपि भुङ्क्ते वृद्धो न यौवने।
तद्दत्तस्येह नाशोस्ति सर्व्वथा रिपुसूदन॥

तद्दीयफलमितिशेषः।

विष्णुधर्म्मात्। परस्थाने वृथा दानं सदोषं परिकीर्त्तितम्।
आरूढ़पतिते चैव अन्यायात्तैर्धनैश्च यत्।
व्यर्थं हि ब्राह्मणे दानं पतिते तस्करे तथा।
गुरोश्चाप्रीतिजनके कृतघ्ने ग्रामयाजके॥
वेदविक्रायके चैव यस्य चोपपति र्गृहे।
स्त्रीभिर्जितेषु यद्दत्तं व्यालग्राहे तथैव च॥
ब्रह्मबन्धौच यद्दत्तं यद्दत्तं वृषलीपतौ।
परिचारके च यद्दत्तं वृथा दानानि षोड़श॥

महाभारते। पङ्ग्वन्ध-वधिरा मूका व्याधिनोपहताश्च ये।
भर्त्तव्यास्ते महाराज न तु देयः प्रतिग्रहः॥

इति प्रतिग्रहीतृ निरूपणम्।

अथ द्रव्याख्यं दानाङ्गमुच्यते।

तत्र देयनिरूपणम्।

भविष्यपुराणे। यद्यदिष्टं विशिष्टञ्च न्यायप्राप्तञ्च यद्भवेत्।
तत्तद्गुणवते देयमित्येतद्दानलक्षणम्॥

वह्निपुराणे। शुभोपात्तेन यत्किञ्चित् करोति लघुना नरः।
अनन्तं फलमाप्नोति मुद्गलोऽपि यथा पुरा॥
'शुभोपात्तेन' न्यायोपार्ज्जितेन।

'लघुना' स्वल्पेन द्रव्येणेतिशेषः।

देवीपुराणे। न्यायतो यानि प्राप्तानि स्वाल्पान्यपि नृपोत्तम।

तानि देयानि देव्यास्तु कन्यका-योषितां सदा।

तद्भक्तेषु च विप्रेषु अपरेषु च नित्यशः॥

विष्णुपुराणे। यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे।

तत्तद्गुणवते देयं तदेवाक्षयमिच्छता॥

महाभारते। विशेषतो महाराज तस्य न्यायार्ज्जितस्य च।

श्रद्धया विधिवत् पात्रे दत्तस्यान्तो न विद्यते॥

गौतमः। स्वामी ऋक्थ-क्रय-सम्विभाग-परिग्रहा-धिगमेषु ब्रा-ह्मणस्याधिकं लब्धं चत्रियस्य विजितं निर्व्विष्टं वैश्यशूद्रयोरिति।
'अप्रतिबन्धः' दायः तत्र ऋक्थं। 'सम्विभागः, सप्रतिबन्धो दायः।
'परिग्रहः, जलतृणकाष्ठादेरनन्यपूर्व्वस्य स्वीकारः। 'अधिगमः'
निध्यादेः प्राप्तिः। एषु निमित्तेषु स्वामी भवति। 'अधिकम्'
असाधारणम्। 'निर्व्विष्टम्, कृष्यादिना द्विजशुश्रूषादिना च यल्ल-ब्धम्। निर्व्वेशो भृतिभोगयोरिति स्मरणात्।

मनुः। सप्त वित्तागमा धर्म्म्या दायो लाभः क्रयो जयः।

प्रयोगःकर्म्मयोगश्च सत्प्रतिग्रह एव च॥

न्यायोपचयार्थं द्रव्यप्रयोगः।

'कर्म्मयोगः, आर्त्विज्यम्।

नारदः। धनमूलाः क्रियाः सर्व्वा यत्नस्तस्यार्ज्जने मतः।

रक्षणं वर्द्धनं भोग इति तस्य विधिः क्रमात्॥

तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च।

कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पुनः॥

'एकैकस्य शुक्लादेः सप्त सप्तभेदा भवन्तीत्यर्थः।
श्रुत-शौर्य्य-तपः-कन्या-याज्य-शिष्या-न्वयागतम्।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः॥

'आगतशब्दः' श्रुतादिभिः प्रत्येकं सम्बध्यते। 'कन्यागतम्, आर्षविवाहे वराद्गृहीतं गोमिथुनादि। 'याज्यागतं' आर्त्विज्यादिलब्धम्। 'शिष्यागतम्, गुरुदक्षिणादि। अत्र च यथाधिकारं, शुक्लत्वमवधेयं। 'उदयः' फलं तदप्यस्य शुक्लमित्यर्थः।

कुसीद-कृषि-वाणिज्य-शिल्प-शुल्का-नुवृत्तितः।
कृतोपकारादाप्तञ्च शबलं समुदाहृतम्॥

'न्यायोपचयार्थं द्रव्यप्रयोगः, कुसीदं।' शिल्पं, कारुकादिकर्म। 'आकरादिभ्योद्रव्योदयः, शुल्कं। 'अनुवृत्तिः, सेवा।

पार्श्विक-द्यूत-चौर्य्या-र्त्ति-प्रतिरूपक-साहसैः।
व्याजेनोपार्जितं यत्तत् सर्व्वेषां कृष्णमुच्यते॥

पार्श्विकोपार्जितं, उत्कोचादिलब्धं। 'आर्त्त्युपार्जितं, परपीड़या लब्धं। प्रतिरूपकं, मणिसुवर्णादेः प्रतिरूपकरणं। 'साहसं, स्वप्राणात्ययाङ्गीकारेण पश्यतोहरत्वादिकं। 'व्याजः' छद्मेन तपःप्रभृति।

तेन क्रयो विक्रयश्च दानं ग्रहणमेव च।
विविधाश्च प्रवर्त्तन्ते क्रियाः सम्भोग एव च॥
यथाविधेन द्रव्येण यत् किञ्चित् कुरुते नरः।
तथाविधमवाप्नोति सफलं प्रेत्य चेह च॥

'यथाविधेन' शुक्लेन कृष्णेन शबलेन वा दानादि कुरुते तथाविधं फलमाप्नोतीति, शुक्लेन, शुक्लं, दुःखरहितम्।

'शबलेन, मिश्रं । कृष्णेन, अशुक्लोदयम् ।

पद्मपुराणे । शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत् ।

शबलं मध्यमफलं कृष्णं हीनधमं फलम् ॥

ब्रह्मप्रोक्ते । शुक्लवित्तेन यो धर्म्मं प्रकुर्य्यात् श्रद्धयान्वितः ।

तीर्थं पात्रं समासाद्य देवत्वे तत् समश्नुते ॥

राजसेन च भावेन वित्तेन शबलेन च ।

दद्याद्दानमतिथिभ्यो मानुषत्वे तदश्नुते ॥

तमोवृत्तस्तु यो दद्यात् कृष्णवित्तेन मानवः ।

तिर्य्यक्त्वे तत्फलं प्रेत्य समश्नाति नराधमः ॥

नारदः । तत्पुनर्द्वादशविधं प्रतिवर्णाश्रयात् स्मृतम् ।

साधारणं स्यात्त्रिविधं शेषं नवविधं स्मृतम् ॥

धर्म्मागमितिशेषः । प्रतिवर्णाश्रयान्नवविधं साधारणं त्रिविध मित्येवं द्वादशविधमित्यर्थः ।

क्रमागतं प्रीतिदायः प्राप्तञ्च सह भार्य्यया ।

अविशेषेण सर्व्वेषां वर्णानां त्रिविधं धनम् ॥

वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणम् ।

प्रतिग्रहेण संलब्धं याज्यतः शिष्यतस्तथा ॥

त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् ।

युद्धोपलब्धं काराच्च दण्डाच्च व्यवहारतः ॥

'कारः', बल्याद्दिः ।

वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम् ।

कृषि-गोरक्ष-वाणिज्यैः शूद्रस्यैभ्यस्त्वनुग्रहात् ॥

'एभ्यः' ब्राह्मणादिभ्यः ।

सर्व्वेषामेव वर्णानां एवं धर्म्मोधनागमः।
विपर्य्ययादधर्म्मः स्यान्नचेदापद्गरीयसी॥

( एवंधर्म्मसाधनं द्रव्यं निरूप्य तत्र कियद्देयं किं देयमित्यपेक्षायां
याज्ञवल्क्यः।

स्वं कुटुम्बाविरोधेन देयं दारसुतादृते।
नान्वये सति सर्व्वस्वं यच्चान्यस्मै प्रतिश्रुतम्॥
'अन्वये' सन्ताने। 'प्रतिश्रुतं' प्रतिज्ञातम्।
'कुटुम्बाविरोधस्तु, व्याख्यातो बृहस्पतिना।
कुटुम्बभक्त-वसनाद्देयं यदतिरिच्यते।
मध्वास्वादो विषं पश्चाद्दातुर्धर्म्मोऽन्यथा भवेत्॥
'भक्तं', अन्नं। 'वसनं' वस्त्रं। (यावता द्रव्येण कुटुम्बस्य वस्त्रमन्नं
संपद्यते तदतिरिक्तं देयं, इतरत्तु न देयमित्यर्थः)।
मनुः। शक्तः परजने दाता स्वजने दुःखजीविनि।
मध्वापातो विषास्वादः स धर्म्मप्रतिरूपकः॥
कात्यायनः। सर्व्वस्वं गृहवर्ज्जन्तु कुटुम्बभरणाधिकम्।
यत्र द्रव्यं स्वकं देयमदेयं स्यादतोन्यथा॥
तथा। सप्तराजाद्दृच्छेत्वात् यद्यत् क्षेत्रं प्रचीयते।
पित्रा वाथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम्॥
(सप्तराजादिभ्यो यत्प्रचीयते, अधिकं भवति, तद्दातव्यमिति
विवक्षितमित्यर्थः)।
शिवधर्म्मात्। तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत्।
भागद्वयन्तु धर्म्मार्थमनित्यं जीवितं यतः॥

(अशेषवित्तस्य भागपञ्चकं परिकल्प्य भागत्रयं जीवनाय संरक्ष्य
भागद्वयं धर्म्माय कल्पयेदित्यर्थः) ।

महाभारते । एकां गां दशगुर्दद्यादश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात्* सर्व्वे तुल्यफलाः स्मृताः ॥

(नन्वेतद्वचनद्वयोपात्तयोर्व्वित्तगोशब्दयोरुपलक्षणार्थत्वेन देय-
मात्रपरत्वाद्विषमभागपरिकल्पनं विरुद्धं यथाश्रुत-गो-वित्त-परत्वे-
नाविरोधे दशगुरेकां गांदद्यादितिवचनाद्दशावरगोधनिनोऽपि
गोदानानधिकारः स्यात् दशधेन्वशद्वयोर्व्धनिपरत्वे तु उपलक्ष-
णपक्षाङ्गीकाराद्विरोधतादवस्थ्यं तस्मान्न्यूनाधिककल्पयोः कृपणो-
दाराधिकारिविषयतयैव व्यवस्थेति सुस्थम् ॥

(कुटुम्बाविरोधेन देयमित्युक्तं ।) तस्यापवादमाह ।

व्यासः । कुटुम्बं पीड़यित्वापि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥
(सत्पतिथ्यादिविषयमेतत्) ।

कात्यायनः । स्वेच्छादेयं स्वयंप्राप्तं बन्धाचारेण बन्धकम् ।
वैवाहिकक्रमायाते सर्व्वदानं न विद्यते ॥

'बन्धकं' आधिः तद्बन्धाचारेणाधिरूपेणैव देयं । 'यद्विवाहलब्धं
तत्तस्यां भार्य्यायां सत्यां सर्व्वमदेयं' । 'यच्च' पितामहादिक्रमायातं
तत्र पुत्रे सति न देयम् ।

सौदायिकं क्रमायातं शौर्य्यप्राप्तञ्च यद्भवेत् ।
स्त्री-ज्ञाति-स्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥
'सौदायिकं' विवाहलब्धं तत्रार्थ्ययानुज्ञातम् ।

---

* शतशः बहुगोधन इति क्वचित्पाठः ।

'क्रमायातम्' अविभक्तधनैर्ज्ञातिभिरनुज्ञातम्। भृतेन, सता युद्धेन लब्धं स्वामिनानुज्ञातमित्यर्थः।

याज्ञवल्क्यः। देयं प्रतिश्रुतञ्चैव दत्त्वा नापहरेत् पुनः।

यमः। यच्च वाचा प्रतिज्ञातं कर्म्मणा नोपपादितम्।
तद्धनमृणसंयुक्तमिह लोके परत्र च॥

'ऋणसंयुक्तं' ऋणासमर्पणजन्यदोषसंयुक्तमित्यर्थः।

सप्तजातानरो हन्यादसंमानांस्तु सप्त च।
अतिक्रान्तान् सप्त हन्याद्प्रयच्छन् प्रतिश्रुतम्॥
प्रतिश्रुताप्रदानेन* दत्तस्य हरणेन च।
जन्मप्रभृति यत्पुण्यं तत्सर्व्वं संप्रणश्यति॥

महाभारते। ब्राह्मणं स्वयमाहूय भिक्षार्थं क्षयवर्त्तिनम्।
पश्चान्नास्तीति यो ब्रूयात्तं विद्याद्ब्रह्मघातकम्॥

तथा। संश्रुत्य यो न दित्सेत याचिता यस्य नेच्छति।
उभावनृतिकावेतौ मृषा पापमवाप्नुतः॥

तथा। यो न दद्यात् प्रतिश्रुत्य स्वल्पं वा यदि वा बहु।
आशास्तस्य हताः सर्व्वाः क्लीवस्येव प्रजाफलम्॥
यं निरीक्षेत संक्रुद्ध आशया पूर्व्वजातया।
प्रदहेत हितं राजन् कक्षमक्षयभुग्यथा॥
तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर।

नारदः। ब्राह्मणस्य च यद्देयं सान्वयस्य † च नास्ति कः।
सकुल्ये तस्य निनयेत्तदभावेऽस्य बन्धुषु॥

---

* दत्तस्योच्छेदनेन चेति क्वचित्पाठः।

† न चास्ति च इति क्वचित्पाठः।

यदा तु न सकुल्याः स्युर्न च सम्बन्धि-बान्धवाः ।
दद्यात् सजाति-शिष्येभ्यस्तदभावेऽप्सु निक्षिपेत् ॥

गौतमः । प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् ॥

कात्यायनः । प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्वं तस्मै प्रदास्यामीत्युक्तेऽपि न तथा भवेत् ॥

अथ फलातिशयप्रतिपादनार्थं पात्रविशेषेण देयविशेषाः ।

भविष्यपुराणे । गो-भू-तिल-हिरण्यादि दद्यान्नित्यमतन्द्रितः ।
तथा द्रव्यविशेषांश्च दद्यात् पात्रविशेषतः ॥
आर्त्तानामन्नदानञ्च गोदानञ्च कुटुम्बिनाम् ।
तथा प्रतिष्ठाहीनानां क्षेत्रदानं प्रशस्यते ॥
सुवर्णं याज्ञिकानाञ्च विद्याश्चैवोर्द्धरेतसाम् ।
कन्याश्चैवानपत्यानां ददतां गतिरुत्तमा ॥

विष्णुधर्म्मोत्तरात् । शुश्रूपकरणं द्रव्यं क्षत्रिये द्विजपुङ्गवाः ।
पण्योपयोगि तद्वैश्ये शूद्रे शिल्पोपयोगि च ॥
यस्योपयोगि यद्द्रव्यं देयं तस्यैव तद्भवेत् ।
येन येन च भाण्डेन यस्य वृत्तिरुदाहृता ॥
तत्तत्तस्यैव दातव्यं पुण्यकामेन धीमता ।
दण्डं कृष्णाजिनञ्चैव तथा विप्राः कमण्डलुम् ॥
भीरं पुण्यमवाप्नोति दत्त्वैतान् ब्रह्मचारिणः ।
वस्त्रं शय्यासनं धान्यं वेश्म वेश्मपरिच्छदम् ॥
गृहस्थाय तु तद्दत्तं ज्ञेयं बहुफलं सदा ।
नीवारं वल्कलं शाकं फलं मूलञ्च गोरसम् ॥

वानप्रस्थाय यद्दत्तमनन्तं परिकीर्त्तितम्।
भिक्षाप्रदानं यतये पात्रदानं तथाहितम्॥
गन्ध-मङ्गल्य-ताम्बूल-रक्तवस्त्रादिकं स्त्रियः।
स्त्रीणां प्रदानं दातव्यं भर्त्तृहस्ते तु नान्यथा॥
प्रोक्तं संग्रहणं ह्येतद्गतं भर्त्तुः प्रयच्छतः।
अन्नं प्रतिश्रयञ्चैव पान्थे दत्तं महाफलम्॥
विवाहादिक्रियाकाले तत्क्रियासिद्धिकारणम्।
यः प्रयच्छति धर्म्मज्ञः सोऽश्वमेधमवाप्नुयात्॥
आतुरेभ्यो धनं दत्त्वा दानं बहुफलं भवेत्।
बालक्रीड़नकं दत्त्वा मृष्टमन्नं तथैव च॥
फलं मनोहरं वापि अग्निष्टोमफलं लभेत्।
मृष्टान्नं मानवो दत्त्वा मृष्टान्नानि तु काङ्क्षताम्॥
अक्षयं फलमाप्नोति स्वर्गलोकञ्च गच्छति।
श्रीविहीने तथा दत्त्वा भोजनं द्विजसत्तम॥
वस्त्रं शुभ्रञ्च धर्म्मज्ञः पुण्यं महदुपाश्नुते।
कृपास्थानं परं विप्रा विश्रुताः पुरुषाः श्रिया॥
तस्यानुकम्पा कर्त्तव्या सतां वर्त्मनि तिष्ठता।
कार्य्यं सत्यधर्मं ज्ञात्वा परेषां समुपस्थिते॥
अक्षयं फलमाप्नोति नात्र कार्य्या विचारणा।
यवसानां प्रदानेन धेनुमत्सु द्विजातिषु॥
लवणानाञ्च धर्म्मज्ञाः फलमक्षयमश्नुते।
प्रसवेषु तु यद्दत्तं व्यसनार्त्तिभयेषु च॥
तद्दानमक्षयं प्रोक्तं पुरुषस्य विपश्चितः॥

दत्त्वा ब्राह्मणशार्दूल जलपात्रमथार्थिने।
फलमक्षयमाप्नोति नात्र कार्य्या विचारणा॥

अङ्गिराः। देवतानां गुरूणाञ्च मातापित्रोस्तथैव च।
पुण्यं देयं प्रयत्नेन नापुण्यं नोदितं क्वचित्॥

नन्दिपुराणे। पापदः पापमाप्नोति नरो लक्षगुणं सदा।
पुण्यदः पुण्यमाप्नोति शतशोऽथ सहस्रशः॥
तथा पात्रविशेषेण दानं स्यादुत्तरोत्तरम्।
पितृ-मातृ-गुरु-ब्रह्मवादिनां दीयते तु यत्॥
तल्लक्षगुणितं विद्यात् पुण्यस्य पापमेववा॥

वह्निपुराणे। द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ।
दाताऽन्नस्य च दुर्भिक्षे सुभिक्षे हेम-वस्त्रदा॥

अथ अदेय निरूपणम्॥

देवलः। अन्यायाधिगतां दत्त्वा सकलां पृथिवीमपि।
श्रद्धावर्ज्जमपात्राय न काञ्चिद्भूतिमाप्नुयात्॥

वह्निपुराणात्। अन्यायोपगतं द्रव्यं गृहीत्वा यो ह्यपण्डितः।
धर्म्माभिकाङ्क्षी यजते न धर्म्मफलमश्नुते॥
धर्म्मवैतंसिको यस्तु पापात्मा पुरुषस्तथा।
ददाति दानं विप्रेभ्यो लोकविश्वासकारणम्॥
पापेन कर्म्मणा विप्रो धनं लब्ध्वा निरंशकः।
राग-मोहा-न्वित स्वान्तः कलुषां योनिमाप्नुयात्॥
अर्थसञ्चयवृद्धिर्हि लोभ-मोह-वशंगतः।
उद्वेजयति भूतानि हिंसया पापचेतनः॥
एवं लब्ध्वा धनं लोभात् यजते यो ददाति च।

स पापकर्म्मणा तेन न सिध्यति पुरागमात्॥

तथा। एतैरन्यैश्च बहुभिरन्यायोपार्ज्जितैर्धनैः।

आरभ्यन्ते क्रिया यास्तु पिशाचास्तत्र दैवतम्॥

वृद्धशातातपः। द्रव्येणान्यायलब्धेन यः करोत्यौर्द्ध्वदेहिकम्।

न स तत्फलमाप्नोति तस्यार्थस्य दुरागमात्॥

स्कन्दपुराणे। देवद्रव्यं गुरुद्रव्यं द्रव्यं चक्रेश्वरस्य च।

त्रिविधं पतनं दृष्टं दान-लङ्घन-भक्षणात्॥

यमः। अपहृत्य परस्यार्थं दानं यस्तु प्रयच्छति।

स दाता नरकं याति यस्यार्थस्तस्य तत्फलम्॥

तथा। परिभुक्तमवघ्रातमपर्य्याप्तमसंस्कृतम्।

यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते॥

'परिभुक्तं' गृहीतोपयोगं वस्त्रादि।

'अपर्य्याप्तं' स्वकार्य्याक्षमं जरद्गवादि।

शातातपः। वेद-विक्रयनिर्द्दिष्टं स्त्रीषु यच्चार्जितं धनम्।

अदेयं पितृदेवेभ्यो यच्च क्लीवादुपागतम्॥

(वेदविक्रयो निर्द्दिश्यते व्यपदिश्यते यत्तत्तथा)।

(निर्व्विष्टमितिपाठे वेदविक्रयाल्लब्धमित्यर्थः)।

'स्त्रीषु यच्चार्जितमिति' स्त्रीव्यापारोपजीवनेन-

यल्लब्धम्। स्त्रीषु विक्रीतास्विति केचित्।

दक्षः। सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्।

अन्वाहितञ्च निक्षेपः सर्व्वस्वञ्चान्वये सति॥

आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः।

यो ददाति स मूढ़ात्मा प्रायश्चित्तीयते नरः॥

'सामान्यं' अनेकस्वामिकम् । 'याचितं' संव्यवहारार्थं याचित्वानीतं वस्त्रालङ्कारादि । 'गृहस्वामिने अदर्शयित्वा तत्परोक्षमेव गृहस्वामिने अर्पणीयमिति गृहजनहस्ते स्थापितं द्रव्यं 'न्यासः' । 'आधिः' प्रसिद्धा, । 'दाराः' कलत्रं । 'सद्दनं' दारधनम् । तच्च व्याख्यातं मनुना ।

अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि ।
भ्रातृ-मातृ-पितृ-प्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥
'अध्यग्नि' अग्निसमक्षं यत् स्त्रियै दत्तम् ।
'अध्यावाहनिकं' विवाहकाले पित्रादिदत्तम् ।
'प्रीतिकर्म्मणि' स्त्रीपुंसम्बन्धेन भर्त्रार्पितम्
विवाहोत्तरकालेपि भ्रात्रादिभ्यः 'प्राप्तम्' ।

याज्ञवल्क्योप्याह । भ्रातृ-मातृपितृ-पतिप्राप्तमध्यग्न्युपागतम् ।
आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितम् ॥

'दारान्तरमिच्छता भर्त्रा यद्दत्तं' 'तदाधिवेदनिकं' एवं प्रकारं स्त्रीधनं न देयमिति । 'अन्वाहितं' यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यस्य हस्ते स्वामिने देहीति निहितम् । गृहस्वामि समक्षं स्थापितं द्रव्यं 'निक्षेपः' ।

कात्यायनः । विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्व्वस्वमात्मनैव तु योजयेत् ॥
आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्त्तन्त इति शास्त्रस्य निश्चयः ॥

( आपत्काले तु कर्त्तव्यं दानं विक्रय एववेति स्वकीयदानविक्रये च्छुदारादिविषयम् ) ।

यत्तु दाराणां, आपत्स्वपि न देयानीतिदर्शनादेयत्वमुक्तं तत्
स्वदान-विक्रयानिच्छुदारादिविषयम्।

वशिष्ठः। शुक्र-शोणितसम्भवः पुरुषो मातापितृनिमित्तक
स्तस्य प्रदान-विक्रय-परित्यागेषु मातापितरौ प्रभवतः नत्वेकं
पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्व्वेषां न तु स्त्री
पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुः।

बृहस्पतिः। कर्म्मेचिच्छायाचमानाय दत्तं धर्म्माय यद्भवेत्।
पश्चाच्च न तथा तत्स्यान्न देयं तस्य तद्भवेत्॥

(धर्म्मं कर्त्तुं याचमानाय यद्दत्तं तेन चेदसौ धर्म्मं न कुर्य्या-
त्तदा तत्तस्मै न देयमित्यर्थः)।

अङ्गिराः। बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः।
विभक्तदक्षिणा ह्येता दातारं तारयन्ति हि॥
एका एकस्य दातव्या न बहुभ्यः कथञ्चन।
दातुर्व्विक्रयमापन्ना दहत्यासप्तमं कुलम्॥

(विक्रेतुरेवैतद्दोषप्रदर्शनं न प्रकृतस्य दातुरिति)।

औपकायनः। कन्या-शय्या-गृहञ्चैव देयं यच्चोस्त्रियादिकम्।
तदेकस्मै प्रदातव्यं न बहुभ्यः कथञ्चन।

व्यासः। न व्यङ्गां रोहिणीं वन्ध्यां न कृशां मृतवत्सकाम्।
न वामनां वेहतञ्च दद्याद्विप्राय गां नरः॥
'वेहत्' गर्भोपघातिनी।

देवलः। विवर्णां रोगिणीं रूक्षां स्थविरां शृङ्गभीषणीम्।
चौर-चोरशरीराङ्गां दत्त्वा दोषमवाप्नुयात्॥

कात्यायनः। न चोषरां न निर्द्दग्धां महीं दद्यात् कथञ्चन।

न श्मशानपरीताञ्च न च पापानिषेविताम्॥

'पापाः' हिंस्रप्राणिनो व्याघ्रादयः।

विष्णुधर्म्मोत्तरे। सोषरां तस्कराकीर्णां तथा व्यालवतीं भुवम्।

न दद्यात्तु द्विजश्रेष्ठो या च सन्धिषु संस्थिता॥

स्कन्दपुराणे। पापदः पापमाप्नोति नरो लक्षगुणं सदा।

तस्मान्न दद्यान्मेधावी पातकं जातु कस्यचित्॥

महाभारते। दुःखितेभ्यो हि भूतेभ्यो मृत्यु-रोग-जरादिभिः।

भूयः को दुःखमपरं सहृत्तो दातुमर्हति॥

दुःखं ददाति योऽन्यस्य ध्रुवं दुःखं स विन्दति।

तस्मान्न कस्यचिद्दुःखं दातव्यं दुःखभीरुणा॥

अथ पात्रविशेषेण देयमुच्यते।

यमः। सुवर्णं रजतं ताम्रं यतिभ्यो यः प्रयच्छति।

न तत्फलमवाप्नोति तत्रैव परिवर्त्तते॥

'परिवर्त्तः' विपर्य्ययः 'एवशब्दः' अप्यर्थः तेन 'तत्र' तस्मिन् दातर्य्यपि परिवर्त्तते, धर्म्मविपरीतं धर्म्मं जनयतीत्यर्थः।

तथाचोक्तं। यतये काञ्चनं दत्त्वा दातापि नरकं व्रजेदिति॥

देवलः। पक्वमन्नं गृहस्थस्य वानप्रस्थस्य गोरसः।

वृत्तिश्च भिक्षुवृत्तिभ्यो न देयं पुण्यमिच्छता॥

'वृत्तिः' भिक्षातिरिक्तं वर्त्तनम्।

तथा। न शूद्राय हविर्दद्यात् स्वस्ति क्षीरं तिलान् मधु।

न शूद्रात् प्रतिगृह्णीयात्ते षामन्यन्निवेदयेत्॥

गोरसं काञ्चनं चैव गास्तिला मधु-सर्पिषी।

तथा सर्व्वान्नसांश्चापि चण्डालेभ्यो न दीयते॥

'स्वस्ति न दद्यादिति' प्रणाममन्तरेण शूद्रस्य स्वस्तीति न ब्रूयादित्यर्थः। 'तेषामिति' चोरादीनां क्रयार्थं मन्त्रद्रव्यं निवेदयेदित्यर्थः।

शङ्खलिखितौ। कृशरं पायसं यावं दधि-मधु-कृष्णाजिनानि

शूद्रेभ्यो न दद्यान्नोपाकृतं किञ्चित्॥

विष्णुधर्मोत्तरात्। भुवं धेनुमथाश्वञ्च रत्नानि कनकन्तथा।

तिलांश्च कुञ्जरं दद्यान्नाविज्ञाय गुणागुणान्॥

अथ ग्राह्यमुच्यते। तत्र व्यासः।

कुटुम्बार्थं हि सच्छूद्रात् प्रतिग्राह्यमयाचितम्।

त्वर्थमात्मने चैव न हि याचेत कर्हिचित्॥

स्कन्दपुराणे। दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा।

असाधोरपि गृह्णीयात् प्रतिग्रहमतन्द्रितः॥

ऋणापाकरणार्थञ्च प्रतिग्राह्यं द्विजोत्तमैः।

चिकीर्षया तु यज्ञस्य मातापित्रर्थमेव च॥

गृह्णीयाद्ब्राह्मणादेव नित्यमाचारवर्त्तिनः।

अन्यथा विमलं दत्तं तथा धर्म्मो न हीयते॥

अब्राह्मणकृताद्दानाद्विशुद्धादपि सर्व्वतः।

ब्राह्मणेन कृतं ग्राह्यं निषिद्धमपि जानता॥

'निषिद्धमपि' अनापदि निषिद्धं कृष्णाजिनादि।

ब्रह्माण्डपुराणात्। अनापद्यतिधर्म्मेण याच्यतः श्रियतस्तथा।

गृह्णन् प्रतिग्रहं विप्रो न धर्म्मात् परिहीयते॥

समा-षण्मास-मासैक-षडह-त्रिदिनत्र्यहम्।

एकाह्निकं वा धर्म्माय गृह्णीयादुत्तरोत्तरम्॥

गारुड़पुराणात् । यावता पञ्चयज्ञानां कर्त्तुं निर्वहणं क्षमः ।
तावदेव हि गृह्णीयात् कुटुम्बस्यात्मनस्तथा ॥
यद्गृहीतमनिन्द्येभ्यः श्रद्धापूतञ्च यद्भवेत् ।
दानं प्रतिग्रहीतारं तारयत्येव तद्ध्रुवम् ॥
द्रव्यराशिरपि श्रेयाननिन्द्यात् प्रतिगृह्णताम् ।
निन्द्यस्य द्रव्यलेशोपि निरयायैव जायते ॥

बृहस्पतिः । अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् ॥

ब्रह्मवैवर्त्तात् । पितृ-मातृ-गुरोरर्थे-विवाहार्थञ्च धर्म्मतः ।
अध्वरार्थञ्च विदुषा ग्रहीतव्यं धनं सदा ॥
गृह्णन् गो-भू-हिरण्यादि तथा नैव विचारयेत् ।
कृतान्नन्तु ग्रहीतव्यं बहुशः सुपरीक्षितम् ॥

सम्वर्त्तः । गृहस्थस्तु सदा युक्तो धर्म्ममेवानुचिन्तयेत् ।
पोष्यवर्गार्थसिद्ध्यर्थं धनमिच्छेत बुद्धिमान् ॥

तथा । अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः ।
अन्यत्र कुलटा-षण्ड-पतितेभ्यस्तथा द्विषः ॥

याज्ञवल्क्यः । राजा-न्तेवासि-याज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
दम्भि-हैतुक-पाषण्डि-वकवृत्तींश्च वर्ज्जयेत् ॥

तथा । देवा-तिथ्य-र्च्चन-कृते गुरु-भृत्यादिवृत्तये ।
सर्व्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥

'सर्व्वतः' शूद्रादेरपि । 'आत्मवृत्तिः' शरीरधारणमात्रं न तु तृप्तिः ।

तथा विष्णुः । गुरून् भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन् देवता-तिथीन् ।
सर्व्वतः प्रतिगृह्णीयात् न तु तृप्येत् स्वयन्ततः ॥

अङ्गिराः। गुर्व्वर्थमतिथीनाञ्च भृत्यानाञ्च विशेषतः।
शूद्रान्नं प्रतिगृह्णीयात् न तु भुञ्जीत स्वयन्ततः॥
मनुः।* आहृतामुद्यतां भिक्षां पुरस्तादप्रचोदिताम्।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्म्मणः॥
नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते॥
याज्ञवल्क्यः। कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्या-सनं धानाः प्रत्याख्येयं न वारि च॥
मनुः। शय्यां गृहान् कुशान् गन्धान् पयः पुष्पं मणीं दधि।
मत्स्या धानाः पयो मांसं शाकञ्चैव † न निर्णुदेत्॥
तथा। एधो-दकं मूल-फलमन्नमभ्युद्यतञ्च यत्।
सर्व्वतः प्रतिगृह्णीयान्मधु चाभयदक्षिणाम्॥
'एधः' काष्ठं। 'अभ्युद्यतं' अयाचितागतम्।
अङ्गिराः। खल-क्षेत्रगतं धान्यं वापी-कूपगतं जलम्।
अदद्भ्योपि तद्ग्राह्यं यच्च गोष्ठगतं पयः॥
पक्वान्नवर्ज्जं विप्रेभ्यो गो-धान्यं क्षत्रियादपि।
वैश्यात्तु सर्व्वधान्यानि शूद्राद्ग्राह्यं न किञ्चन॥
(अभोज्यान्नविप्रादिविषयमेतत्)।
यत्तु क्षेत्रगतं धान्यं खले वाथगृहाद्बहिः।
सर्व्वकालं ग्रहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम्॥

---

* आहृताभ्युद्यतामिति क्वचित् पाठः।
† न निर्मुदेदिति पाठान्तरम्।

संस्कारैः शुध्यति क्षेत्रदान्यं तेन शुचि स्मृतम्।
तस्माद्दानं ग्रहीतव्यं मृतसूत्यन्तरेष्वपि॥
'मृतसूत्यन्तरेष्वपीति' तदापद्विषयम्।
आममांसंमधु-घृतं धानाः-क्षीरमथोदितम्।
गुडं तक्रञ्च संग्राह्यं निवृत्तिनापि शूद्रतः॥
शाक-मत्स्या-रनालानि कन्दुकाः सक्तवस्तिलाः।
इक्षुः फलानि पिण्याकं प्रतिग्राह्याणि सर्व्वतः॥
'कन्दुकाः' कन्दाः।

बृहस्पतिः। विवाहोत्सव-यज्ञेषु त्वन्तरामृत-सूतके।
सर्व्वं संकल्पितं ग्राह्यं न दोषः परिकीर्त्तितः॥

शङ्खः। कुमारप्रसवे नाड्यामच्छिन्नायां गुड़-तिल-हिरण्य
वस्त्र-गो-धान्य-प्रतिग्रहेष्वदोषः॥ तदहरित्येके।

आह प्रचेताः। सर्व्वेषां सकुल्यानां द्विपद-चतुष्पद-धान्य-वासो-
दक्षिणाप्रतिग्रहेष्वदोषः।

विष्णुधर्म्मोत्तरात्। ग्राह्यं प्राणप्रदानन्तु चण्डालात् पुक्कसादपि।
जीवन् सर्व्वमवाप्नोति जीवन् धर्म्मं करोति च।
शरीरं धर्म्मसर्व्वस्वं रक्षणीयं प्रयत्नतः॥

अथाग्राह्यमुच्यते।

ब्रह्मपुराणे। ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं साधुतः सदा।
अव्य-स्त्र-मणि-मातङ्ग-तिल-लोहांश्च वर्जयेत्॥
कृष्णाजिन-तिलग्राही न भूयः पुरुषो भवेत्।
शय्या-लङ्कार-वस्त्राणि प्रतिगृह्य मृतस्य च॥

नरकान्न निवर्त्तेत धेनुं तिल-महीस्तथा ॥

बहुभ्यो द्विजवित्तानामपि स्तेयं तरिष्यति ॥

आतुराद्यद्गृहीतन्तु तत् कथं निस्तरिष्यति ॥

'आतुरात्' मुमूर्षोः।

वह्निपुराणात्। हस्त्य-श्व-रथ-यानानि मृतशय्या-सनादि यत्।

कृष्णाजिनञ्च गृह्णाति अनापत्सु गतो द्विजः ॥

तथोभयमुखीं घोरां सशैलां मेदिनीं द्विजः।

कुरुक्षेत्रे च यद्दानं चण्डालात् पतितात्तथा।

मासिकेपि नवश्राद्धे भुञ्जन् प्रेतत्वमाप्नुयात् ॥

स्कान्दपुराणे। अजिनं मृतशय्याञ्च गृह्णीञ्चोभयतोमुखीम्।

कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषोभवेत् ॥

पद्मपुराणे। ब्रह्माण्डं भूमिदानञ्च ग्राह्यं नैकेन तद्भवेत्।

गृह्णन् दोषमवाप्नोति ब्रह्महत्यां न संशयः ॥

'भूमिदानमिति' षोडशमहादानान्तर्गतकाञ्चनमेदिनीदान-विषयमेतत्।

वशिष्ठः। शस्त्रं विषं सुरा वा प्रतिग्राह्याणि ब्राह्मणस्य ॥

भिक्षाग्रहणमधिकृत्य मनुः।

चिकित्सक-कृतघ्नानां शल्यकर्त्तुश्च वार्द्धुषेः।

षण्ढस्य कुलटायाश्च उद्यतामपि वर्जयेत् ॥

(भिक्षामितिशेषः)। 'चिकित्सकोऽत्र' कुवैद्यः।

'षण्ढः' क्लीवः। 'कुलटा' पुंश्चली।

यमः। चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च।

षण्ढनर्त्तकयोश्चैव उद्यतां परिवर्जयेत् ॥

'मृगयुः' मृगहन्ता।

आह वसिष्ठः। चिकित्सकस्य मृगयोः शल्यकर्त्तुश्च पाशिनः।

षण्ढस्य कुलटायाश्च उद्यतापि न गृह्यते॥

'चिकित्सकस्य शल्यकर्त्तुर्मृगयोः पाशिनइति' यथाक्रमं विशेषणद्वयं योजनीयमिति केचित्।

विष्णुः। एतेष्वपि च कार्य्येषु समर्थः सन् प्रतिग्रहे।

नाद्द्यात् कुलटा-षण्ढ-पतितेभ्य स्तथा द्विषः॥

'एतेष्विति' पूर्वोक्तेषु गुरु-देवता-तिथिपूजादिष्वित्यर्थः।

मनुः। नेहेतार्थं प्रसङ्गेन न विरुद्धेन कर्म्मणा।

* न विद्यमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः॥

याज्ञवल्क्यः। न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः।

न विरुद्धप्रसङ्गेन सन्तोषी च भवेत् सदा॥

तथा। प्रतिग्रहे सूनी-चक्री-ध्वजी-वेश्या-नराधिप।

दुष्टा दशगुणं पूर्व्वपूर्व्वादेको यथोत्तरम्॥

'सूना' प्राणिहिंसा सा विद्यते यस्यासौ सूनी प्राणिहिंसापरः। 'चक्री' तैलिकः। 'ध्वजी' सुरायाः कर्त्ता।

सम्वर्त्तः। राजप्रतिग्रहो घोरो मध्वास्वादो विषोपमः।

पुत्रमांसं वरं भुक्तं न तु राजप्रतिग्रहः॥

स्कान्दपुराणे। राजप्रतिग्रहस्पृष्टः पुनर्जन्म न विन्दति।

ब्राह्मण्यं यः परित्यज्य द्रव्यलोभेन मोहितः॥

विषयामिषलुब्धस्तु कुर्य्याद्राजप्रतिग्रहम्।

नरके रौरवे घोरे तस्येह पतनं ध्रुवम्॥

---

* नचदपमानेष्वितिपाठान्तरम्।

तृणा दावाग्निना दग्धाः प्ररोहन्ति घनागमे ।
राजप्रतिग्रहैर्दग्धा न प्ररोहन्ति कर्हिचित् ॥

तथा । राजप्रतिग्रहो घोरो रौद्रः पापो भयानकः ।
नरके यातनां घोरां कः सोढुं शक्तिमान् भवेत् ॥

तथा । ब्रह्मर्षि-गालवश्चाहं कुरुक्षेत्रे पुरा स्थितः ।
अश्वप्रतिग्रहान्नूनमश्वयोनिं समाश्रितः ॥
दावाग्निना च यो दग्ध उदकात् स प्ररोहति ।
प्रतिग्रहेण यो दग्धः स दग्धो न प्ररोहति ॥

मनुः । न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित् ।
भिक्षित्वा यजमानो हि चण्डालः प्रेत्य जायते ॥
ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ।
सर्वे ते ब्राह्मणा निन्द्या ब्रह्मवादिषु गर्हिताः ॥

तथा । हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम् ।
अविद्वान् प्रतिगृह्णानो भस्मी भवति दारुवत् ॥
अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ।
अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति ॥
तस्मादविद्वान् बिभियाद्यस्मात्* कस्मात् प्रतिग्रहात् ।
स्वल्पकेनाप्यविद्वान् हि पङ्के गौरिव सीदति ॥

याज्ञवल्क्यः । विद्या-तपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥

(ततश्च विद्यातपोरहितेनावसीदतापि बहुहिरण्यादिव्यति-

---

* तस्मादिति क्वचित् पाठः।

रेकेण कुटुम्बभरणमात्रोपयिकाल्पद्रव्यप्रतिग्रहः कर्त्तव्यो न तु तथातिप्रशस्तिरिति गम्यते)।

विष्णुधर्म्मोत्तरात्। प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्।

प्रतिग्रहेण विप्राणां ब्रह्मतेजो विनश्यति॥

न द्रव्याणामविज्ञाय विधिं धर्म्म्यं प्रतिग्रहे।

प्राज्ञः प्रतिग्रहं कुर्य्यादवसीदन्नपि क्षुधा॥

'विधिः, मन्त्रेतिकर्त्तव्यताप्रकारलक्षणः।

याज्ञवल्क्यः। प्रतिग्रहसमर्थोऽपि ना दत्ते यः प्रतिग्रहम्।

ये लोका दानशीलानां स तानाप्नोति शाश्वतान्॥

इतिद्रव्यनिरूपणम्॥

अथ कालाख्यं दानाङ्गमभिधीयते।

तत्र पुण्यकालस्तावत्।

देवीपुराणे। नित्यो विभुः स्थितः कालो ह्यवस्था तस्य हेतुजा।

निमित्तादिविशेषैः स लोके पुण्यफलप्रदः॥

श्रीमार्कण्डेय पुराणे।

निमेषैर्दशभिः काष्ठाः साष्टाभिश्च कला पुनः॥

त्रिंशत्काष्ठा कलाभिश्च त्रिंशद्भिः स्यान्मुहूर्त्तकम्॥

अहोरात्रं मुहूर्त्तास्तु नृणां त्रिंशत्तु वै स्मृतम्।

त्रिंशता तैरहोरात्रैः पक्षौ द्वौ मास उच्यते।

तैः षड्भि रयनं वर्षं द्वे ते दक्षिणोत्तरे।

तद्देवानामहोरात्रं दिनं तत्रोत्तरायणम्॥

'साष्टाभिर्दशभिः' अष्टादशभिरित्यर्थः।

आश्वलायनः। देवकार्य्याणि पूर्व्वाह्णे मनुष्याणाञ्च मध्यमे।

पितॄणामपराह्णे च कार्य्याणीति विनिश्चयः॥

अथ तिथिकालः प्रथममुच्यते।

भविष्य पुराणे। तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता॥
प्रतिपादिता पदे पूर्व्वं प्रतिपत्तेन चोच्यते।
स्नानंदानं शतगुणं कार्त्तिके या तिथिर्भवेत्॥

स्कन्दपुराणे। आश्विने मासि संप्राप्ते द्वितीया शुक्लपक्षजा।
दानं प्रदत्तं यत्तस्यामनन्तफलमुच्यते॥

पद्मपुराणे। वैशाखमासे या पुण्या तृतीया शुक्लपक्षजा।
अनन्तफलदा दातुः स्नान-दानादिकर्म्मसु॥

भविष्यपुराणे। शिवा शान्ता सुखा राजंश्चतुर्थी त्रिविधा स्मृता॥
मासि भाद्रपदे शुक्ला शिवलोकेषु पूजिता॥
तस्यां स्नानं तथा दानं उपवासो जपस्तथा।
भवेत् सहस्रगुणितं प्रसादाद्दन्तिनो नृप॥
माघमासि तथा शुक्ला या चतुर्थी महीपते।
सा शान्ता शान्तिदा नित्यं शान्तिं कुर्य्यात्सदैव हि॥
स्नान-दानादिकं सर्व्वमस्यामक्षयमुच्यते।
यदा शुक्लचतुर्थ्यान्तु वारो भौमस्य वै भवेत्॥
तदा सा सुखदा ज्ञेया सुखानामेति कीर्त्तिता।
स्नान-दानादिकं सर्व्वमस्यामक्षयमुच्यते॥

स्कन्दपुराणे। शुक्ला मार्गशिरे मासि श्रावणे याच पञ्चमी।
स्नान-दाने बहुफला नागलोकप्रदायिनी॥

भविष्यपुराणे। येयं भाद्रपदे मासि षष्ठी च भरतर्षभ।
स्नान-दानादिकं सर्व्वमस्यामक्षय मुच्यते॥

तथा। शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो भवेद्यदि।
सप्तमी विजया नाम तत्र दत्तं महाफलम्॥
शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम्।
यदा च स्यात्तदा प्रोक्ता जयानामेति सप्तमी।
स्नान-दानादिकं तस्यां भवेत् शतगुणं विभो॥
"पञ्च तारकमिति, रोहिण्य-श्लेषा-मघा-हस्तास्य।
या मार्गशीर्षमासस्य शुक्लपक्षे तु सप्तमी।
नन्दा सा कथिता वीर सर्व्वानन्दकरी स्मृता।
स्नान-दानादिकं सर्व्वमस्यामक्षय मुच्यते॥
आदिपुराणे। रेवती यत्र सप्तम्यामादित्यदिवसे भवेत्।
तद्दानं शत-साहस्रमिति प्राह दिवाकरः॥
भविष्यपुराणे। पौषे मासि यदा देवि शुक्लाष्टम्यां वुधो भवेत्।
तदा तु सा महापुण्या महारुद्रेति कीर्त्तिता॥
तस्यां स्नानं महादानं तर्पणं विप्रभोजनम्।
मत्प्रीतये कृतं देवि शत-साहस्रिकं भवेत्॥
महाभारते। अष्टकासु च यद्दत्तं तदनन्तमुदाहृतम्॥

आश्वलायनः। हेमन्त-शिशिरयोश्चतुर्णामपरपक्षाणामष्टमी-ष्वष्टका इति॥

तथा शातपथश्रुतिः। द्वादश प्रौर्णमास्यो द्वादशाष्टका द्वादशामावास्या इति॥

'द्वादशापि' कृष्णाष्टम्य इत्यर्थः॥

देवीपुराणे। आश्विनस्य तु मासस्य नवमी शुक्लपक्षजा।
जायते कोटिगुणितं दानं तस्यां नराधिप॥

गरुड़पुराणे। ज्यैष्ठस्य शुक्लदशमी सम्वत्सरमुखी स्मृता।
तस्यां स्नानं प्रकुर्व्वीत दानञ्चैव विशेषतः॥
एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तम।
तिथौ भवति सा प्रोक्ता विष्णुना पापनाशिनी॥
दानं यद्दीयते किञ्चित् समुद्दिश्य जनार्द्दनम्।
होमो वा क्रियते तस्यां अक्षयं कथितं फलम्॥
मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता।
महती द्वादशी ज्ञेया उपवासे महाफला॥
फलं दत्तहुतानाञ्च तस्यां लक्षगुणं भवेत्।
विष्णुधर्म्मोत्तरात्। भाग्यर्क्षसंयुता चैत्रे द्वादशी स्यान्महाफला॥
'भाग्यर्क्षं' पूर्व्वफल्गुनी।
हस्तयुक्ता तु वैशाखे ज्यैष्ठे तु स्वातिसंयुता।
ज्येष्ठायाञ्च तथाषाढ़े मूलोपेता च वैष्णवे॥
'वैष्णवे' श्रावणे मासि।
तथा भाद्रपदे मासि श्रवणेन तु संयुता।
आश्विने द्वादशी पुण्या भवत्याजर्क्षसंयुता॥
'आजर्क्षः' पूर्व्वभाद्रपदाः।
कार्त्तिके रेवतीयुक्ता सौम्ये कृत्तिकया तथा।
'सौम्यः' मार्गशीर्षः।
पौषे मृगशिरोपेता माघे चादित्यसंयुता।
'आदित्यः' पुनर्व्वसुः।
फाल्गुने पुष्यसहिता द्वादशी पावनी परा।
नक्षत्रयुक्तास्वेतासु स्नानं दानमुपोषितम्॥

सकृत्कृतं मनुष्याणामक्षय्यफलदायकम्॥

स्कन्दपुराणे। यस्तु चैत्रत्रयोदश्यां स्नानं दानं समाचरेत्।
फलं शतगुणं तस्य कर्म्मणो लभते नरः॥

ज्योतिःशास्त्रे। कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः।
यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते॥
चैत्रे चतुर्द्दशी शुक्ला श्रावणप्रोष्ठपादयोः।
माघस्य या कृष्णपक्षे दाने बहुफला हि सा॥

विष्णुधर्म्मोत्तरात्।

वैशाखी कार्त्तिकी माघी पौर्णिमा तु महाफला।
पौर्णमासीषु सर्व्वासु मासर्क्षसहितासु च॥
स्नानानामिह दानानां फलं दशगुणं भवेत्।
यस्यां पूर्णेन्दुना योगं याति जीवो महाबलः॥
पौर्णमासी तु सा ज्ञेया महापुण्या द्विजोत्तम।
स्नानं दानं तथा जाप्यमक्षय्यं तत्सदा स्मृतम्॥

ब्रह्मपुराणे। आग्नेयन्तु यदा ऋक्षं कार्त्तिक्यां भवति क्वचित्।
महती सा तिथिर्ज्ञेया स्नान-दानेषु चोत्तमा॥

'आग्नेयमृक्षं' कृत्तिका।

यदा याम्यन्तु भवति ऋक्षं तस्यां तिथौ क्वचित्।
तिथिः सापि महापुण्या ऋषिभिः परिकीर्त्तिता॥

'याम्यं ऋक्षं' भरणी।

प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा॥

'प्राजापत्यं, ऋक्षं' रोहिणी।

व्यासः। अमा वै सोमवारेण रविवारेण सप्तमी।
चतुर्थी भौमवारेण विषुवत्सदृशं फलम्॥

अन्योपि। अमावास्या तु सोमे तु सप्तमी भानुना सह।
चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी॥
चतस्रस्तिथयस्त्वेतास्तुल्याः सूर्य्यग्रहादिभिः।
सर्व्वमक्षयमेतेषु स्नान-दान-जपादिकम्॥

महाभारते। अमा सोमे तथा भौमे गुरुवारे यदा भवेत्।
तत् पर्व्वपुष्करं नाम सूर्य्यपर्व्वशताधिकम्॥

शातातपः। अमावस्या सोमवारे सूर्य्यवारे च सप्तमी।
अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्द्दशी॥
तत्र यः कुरुते कर्म्म शुभं वा यदि वाशुभम्।
षष्टिवर्षसहस्राणि कर्त्ता तत्फलमश्नुते॥

विष्णुपुराणे। अमावस्या यदा मैत्र विशाखास्वातियोगिनी।
श्राद्धे पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीम्॥
अमावस्या यदा पुष्ये रौद्रर्क्षे वा पुनर्व्वसौ।
द्वादशाब्दीन्तथा तृप्तिं प्रयान्ति पितरोर्च्चिताः॥
'रौद्रर्क्षं' आर्द्रा।

वासवा-जैकपादर्क्षे पितॄणां तृप्तिमिच्छता।
वारुणे वाप्यदैवत्ये देवानामपि दुर्लभा॥

'वासवं' धनिष्ठा। 'अजैकपादं' पूर्व्वाभाद्रपदा। 'वारुणं' शततारका। 'आप्यं' पूर्व्वाषाढ़ा।

माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन।
ऋक्षेण कालः स परः पितॄणां नह्यल्पपुण्यैर्नृप लभ्यतेऽसौ॥

'वासवं' शततारा।

अथ युगादिप्रश्नतयः।　तत्र स्कान्दपुराणे।

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम्।
त्रेता सिततृतीयायां वैशाखे समपद्यत॥
दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्।
कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः।
युगादयः स्मृता ह्येते दत्तस्याक्षयकारकाः॥

ब्रह्मपुराणे।　युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्त्तिताः।
फलं दत्तहुतानाञ्च तास्वनन्तं प्रकीर्त्तितम्॥

तथा। एतास्चतस्रस्तिथयो युगाद्या दत्तं हुतञ्चाक्षयमासु विन्द्यात्।
युगे युगे वर्षशतेन यत्तपो युगादिकाले दिवसेन तद्भवेत्॥

तथा।　सूर्य्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य च।
तथा वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य च॥
अन्यस्तु वृषसंक्रान्त्यां द्वापरान्तस्तु संख्यया।
तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य च॥

पद्मपुराणे।　युगादिषु युगान्तेषु स्नान-दान-जपादिकम्।
यत्किञ्चित् क्रियते तस्य युगान्ताः फलसाक्षिणः॥

आदित्यपुराणे।　दिनर्क्षं रेवती यत्र श्रवणश्चैव रात्रिषु।
युगान्तदिवसं विद्धि तत्र दानमनन्तकम्॥
ग्रहोपरागे विषुवे सौम्ये वा मिहिरोपदिः।
सप्तमी शुक्ल-कृष्णा वा युगान्तदिवसं विदुः॥

'मिहिरोपदिः' सूर्य्यग्रहः।

मनुः।　सहस्रगुणितं दानं भवेद्दत्तं युगादिषु।

कार्य-श्राद्धादिकञ्चैतत्तथा मन्वन्तरादिषु ॥

मत्स्यपुराणे। अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकस्य तु।

चैत्रस्य तु तृतीया या तथा भाद्रपदस्य तु।

फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा।

श्रावणस्याष्टमी कृष्णा तथाषाढ़स्य पौर्णिमा।

आषाढ़स्य तु दशमी माघमासस्य सप्तमी।

कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठे पञ्चदशी तथा।

मन्वन्तरादयश्चैता दत्तस्याक्षयकारकाः ॥

स्नानं दानं जपो होमः स्वाध्याय-पितृतर्पणम्।

सर्व्वमेवाक्षयं विन्द्यात् कृतं मन्वन्तरादिषु ॥

(अत्रामावस्याष्टमीव्यतिरेकेण सर्व्वाः शुक्ला एव)। (पुराणान्तरेण तु श्रावणस्यामावस्या भाद्रपदस्य कृष्णाष्टमी मन्वन्तरादिरिति प्रतिपादितम्)।

तद्यथा। आश्विने शुक्लनवमी द्वादशी कार्त्तिके तथा।

तृतीया चैत्रमासस्य तथा भाद्रपदस्य च।

श्रावणस्याप्यमावस्या पौषस्यैकादशी तथा।

आषाढ़स्यापि दशमी माघमासस्य सप्तमी।

नभस्यस्याष्टमी कृष्णा तथाषाढ़ी च पूर्णिमा।

कार्त्तिकी फाल्गुनी चैत्री* ज्यैष्ठी पञ्चदशी तथा।

मन्वन्तरादयश्चैता दत्तस्याक्षयकारकाः ॥

अथ व्यतीपातादिकालाः।

---

* ज्यैष्ठी पञ्चदशीसितेति क्वचित्पाठः।

याज्ञवल्क्यः। शतमिन्दुक्षये* दानं सहस्रन्तु दिनक्षये।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम्॥
वाराहपुराणे। दर्शे शतगुणं दानं तच्छतघ्नं दिनक्षये।
शतघ्नं तच्च संक्रान्तौ शतघ्नं विषुवे ततः।
युगादौ तच्छतगुणमयने तच्छताहतम्॥
सोमग्रहे तच्छतघ्नं तच्छतघ्नं रविग्रहे।
असंख्येयं व्यतीपाते दानं वेदविदो विदुः॥
'शतघ्नं' शतगुणमित्यर्थः।
तथा। उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाड़िकायान्तु।
अर्बुदगुणितं पतने जप-दानाद्यक्षयं पतिते।
उत्पत्त्यादिमानमुक्तं ज्योतिःशास्त्रे।
विंशतिर्द्वियुतोत्पत्तौ भ्रमणे चैकविंशतिः।
पतने दशनाड्यस्तु पतिते सप्त नाड़िकाः॥
(व्यतीपातोऽत्र विष्कुम्भादियोगेषु सप्तदशयोगः)।
(एवमनुना तु प्रकारान्तरेण व्यतीपातो दर्शितः)।
श्रवणा-श्वि-धनिष्ठा-र्द्रा-नागदैवत-मस्तके।
यद्यमा रविवारेण व्यतीपातः स उच्यते॥
'नागदैवतम्' अश्लेषा। 'मस्तकं', प्रथमचरणः।
(मस्तकइति श्रवणादिभिः प्रत्येकं सम्बध्यते)।
(शास्त्रान्तरेऽन्योपि व्यतीपात उक्तः)।
पञ्चाननस्थौ गुरु-भूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे।

---

* पुष्यमिति पाठान्तरम्।

पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥
अस्मिन् हि गो-भूमि-हिरण्य-वस्त्र-दानेन सर्व्वं परिहाय पापम् ।
शूरत्व मिन्द्रत्वमनामयत्वं मन्वाधिपत्यं लभते मनुष्यः ॥

'पञ्चाननः' सिंहः । 'गुरु-भूमिपुत्रौ' हहस्पत्यङ्गारकौ ।
'पाशाभिधाना' द्वादशी । 'करभम्' हस्तनक्षत्रमिति ।
(ज्योतिःशास्त्रे तु रवि-चन्द्रयोः संक्रान्तिसाम्ये सूक्ष्मौ 'वैधृत-व्यतीपातौ' दर्शितौ) ।

तदाह गालवः । चन्द्रार्कयोर्नयनवीक्षण जातमूर्त्तिः
कालानलद्युतिनिभः पुरुषोतिरौद्रः ।
अस्त्रोद्यतो भुवि पतंश्च निरीक्षमाणः
कष्टातयेहमिति च व्यतिपातयोगः ॥

आह भृगुः ।

क्रान्तिसाम्यसमयः समीरितः सूर्य्य पर्व्वसदृशो मुनीश्वराः ।
तत्र दत्त-हुत-जप्त-पूजनं कोटि-कोटि-गुणमाह भार्गवः ॥

(अयमर्थः सूर्य्या-चन्द्रमसोः क्रान्तिसाम्ये पुण्यकालद्वयं सम्भवति) । 'एकः' व्यतीपाताख्यः । 'अपरः' वैधृताख्यः ।
(तत्र संक्रान्तिसाम्यलक्षणस्य व्यतीपातस्य गण्डोत्तरार्द्धादारभ्य क्रमशः सार्द्धेषु पञ्चसु योगेषु सम्भवोस्ति वैधृत संज्ञस्य तु शुक्लयोगादारभ्य सार्द्धेषु संयोगेषु सम्भवोस्ति वैधृते व्यतीपाते दत्तमक्षयताम्भवेत्) ।

भरद्वाजः । व्यतीपाते वैधृते च दत्तस्यान्तो न विद्यते ।
व्यतीपाते विशेषेण स हि सूक्ष्मः प्रकीर्त्तितः ॥

(स्थूलप्रकारेण प्रसिद्धस्तु सप्तविंशतिकमो योगो वैधृत इति) ।

अथोपरागकालः ।

मत्स्यपुराणे । चन्द्रस्य यदि वा भानो राहुणा सह सङ्गमः ।
उपराग इति ख्यातस्तत्रानन्तफलं स्मृतम् ॥
इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं भवेत् ।
गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥
'रवेर्दशगुणमिति' लक्षगुणाद्दशगुणमित्यर्थः ।
एवमुत्तरत्रापि ।

तथा । रविवारे रवेर्ग्रासः सोमे सोमग्रहस्तथा ।
चूडामणिरिति ख्यातस्तत्रानन्तं फलं स्मृतम् ॥

भरद्वाजः । चन्द्र-सूर्य्योपरागे च यत्कर्त्तव्यं तदुच्यते ।
सर्व्वं हेममयं दानं सर्व्वे ब्रह्मसमा द्विजाः ।
सर्व्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥

ऋष्यशृङ्गः । राहुग्रस्ते यदा सूर्य्ये यस्तु श्राद्धं समाचरेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे ॥

शातातपः । अयनेषु सदा देयं विशिष्टं स्वगृहेषु यत् ।
षड़शीतिमुखेचैव विमोक्षे चन्द्र-सूर्य्ययोः ॥
'विमोक्षे' वर्त्तमाने न तु विमुक्तयोरित्यर्थः ।
उपरागे तु तत्कालमिति स्मरणात् ।

तथाच वशिष्ठः । नाड्यः षोड़श पूर्व्वेण संक्रान्तेस्तु परेण च ।
राहोर्दर्शनमात्रेण पुण्यकालः प्रकीर्त्तितः ॥

जावालिरपि । संक्रान्तौ पुण्यकालस्तु षोड़शोभयतः कलाः ।
चन्द्र-सूर्य्योपरागे तु यावद्दर्शनगोचरः ॥

अथ संक्रान्तिकालाः ॥

आह शातातपः।

संक्रान्तौ यानि दत्तानि हव्य-कव्यानि दातृभिः।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि॥
रविसंक्रमणे पुण्ये न स्नायाद्यो हि मानवः।
सप्तजन्मान्तरं रोगी दुःखभागी सदा भवेत॥

वृद्धवशिष्ठः। अयने द्वे च विषुवे चतस्रः षड़शीतयः।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः॥
झषकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने।
विषुवे च तुला-मेषे गोलमध्ये ततो पराः॥
'झषः' मकरः। 'गोलः' राशिचक्रम्।
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः।
षड़शीतिमुखा प्रोक्ता षड़शीतिगुणा फलैः॥
वृष-वृश्चिक-कुम्भेषु सिंहे चैव यदा रविः।
एतद्विष्णुपदं नाम विषुवादधिकं फले॥

गालवः। मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ।
षड़शीतिमुखेतीते तथोदगयनं भूरि फलम्॥
(एतच्च फलाधिक्यप्रतिपादनार्थमुक्तम्)।
पर्व्वकालस्तु संक्रान्तेः प्रागूर्द्ध्वञ्च भवेदिति।

तदाह देवलः। संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितचक्षुः।
तद्योगाच्चाप्यधश्चोर्द्ध्वं त्रिंशन्नाड्यः पवित्रिताः॥
आसन्नसंक्रमं पुण्यं दिनार्द्धं स्नान-दानयोः।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिने॥
याद्याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः।

(अयमर्थः सर्व्वास्वपि संक्रान्तिषु अतीतत्वमनागतत्वञ्चा-नाद्दत्य यत्र दिनार्द्धे अतीता-नागता वा संक्रान्तिः सन्नि-हिता भवति तत्र स्नान-दानादिकं कार्य्यमिति)।

वशिष्ठस्तु विशेषमाह।

त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः।
वर्त्तमाने तुला-मेषे नाड्यस्तूभयतो दश॥

(अत्र वर्त्तमान उभयतइति च सर्व्वैरेव कर्कटकादिभिः सम्बध्यते)।

षड़शीत्यां व्यतीतायां षष्टिरुक्तास्तु नाड़िकाः।
पुण्याख्या विष्णुपद्याञ्च प्राक् पश्चादपि षोड़श॥

'षष्टिः' षोड़श। 'षड़शीत्यामतीतायामिति' पुण्यभूय-स्त्वाभिप्रायेणैतत्। (षड़शीतिमुखेपि पूर्व्वमपि पुण्यकालस्य प्रतिपादितत्वात्)।

तदुक्तं स्मृत्यन्तरे। विष्णुपद्यां धनुर्म्मीन-नृयुक्कन्यासु वै यदा।
पूर्व्वोत्तरगतो रात्रौ भानोः संक्रमणं भवेत्॥
पूर्व्वाह्णे पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः।
अपराह्णे तु पञ्चैव श्रौते स्मार्त्ते च कर्म्मणि॥

(अनेन रात्रौ षड़शीत्यामतीतायामुत्तरदिने पूर्व्वाह्णे पञ्च-नाड्यः पुण्या भवन्ति)। भाविन्याञ्च पूर्व्वदिवसे अपराह्णे पञ्च-नाड्यः पुण्या भवन्तीत्युच्यते।

'नृयुक्' मिथुनराशिः।

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्।

आह शातातपः।

संक्रान्तौ यानि दत्तानि हव्य-कव्यानि दातृभिः।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि॥
रविसंक्रमणे पुण्ये न स्नायाद्यो हि मानवः।
सप्तजन्मान्तरं रोगी दुःखभागी सदा भवेत्॥

वृद्धवशिष्ठः। अयने द्वे च विषुवे चतस्रः षड़शीतयः।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः॥
झषकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने।
विषुवे च तुला-मेषे गोलमध्ये ततो पराः॥

'झषः' मकरः। 'गोलः' राशिचक्रम्।

कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः।
षड़शीतिमुखा प्रोक्ता षड़शीतिगुणा फलैः॥
वृष-वृश्चिक-कुम्भेषु सिंहे चैव यदा रविः।
एतद्विष्णुपदं नाम विषुवादधिकं फले॥

गालवः। मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ।
षड़शीतिमुखेतीते तथोदगयनं भूरि फलम्॥

(एतच्च फलाधिक्यप्रतिपादनार्थमुक्तम्)।

पर्व्वकालस्तु संक्रान्तेः प्रागूर्द्धञ्च भवेदिति।

तदाह देवलः। संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितचक्षुषैः।
तद्योगाच्चाप्यधश्चोर्द्धं त्रिंशन्नाड्यः पवित्रिताः॥
आसन्नसंक्रमं पुण्यं दिनार्द्धं स्नान-दानयोः।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिने॥
याथाः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः।

(अयमर्थः सर्व्वास्वपि संक्रान्तिषु अतीतत्वमनागतत्वञ्चा-नादृत्य अत्र दिनार्द्धे अतीता-नागता वा संक्रान्तिः सन्नि-हिता भवति तत्र स्नान-दानादिकं कार्य्यमिति)।

वशिष्ठस्तु विशेषमाह।

त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः।
वर्त्तमाने तुला-मेषे नाड्यस्तूभयतो दश॥

(अत्र वर्त्तमान उभयतइति च सर्व्वैरेव कर्कटकादिभिः सम्बध्यते)।

षड़शीत्यां व्यतीतायां षष्टिरुक्तास्तु नाड़िकाः।
पुण्याख्या विष्णुपद्याञ्च प्राक् पश्चादपि षोड़श॥

'अष्टिः' षोड़श। 'षड़शीत्यामतीतायामिति' पुण्यभूयस्त्वाभिप्रायेणैतत्। (षड़शीतिमुखेपि पूर्व्वमपि पुण्यकालस्य प्रतिपादितत्वात्)।

तदुक्तं स्मृत्यन्तरे। विष्णुपद्यां धनुर्म्मीन-नृयुकन्यासु वै यदा।
पूर्व्वोत्तरगतौ रात्रौ भानोः संक्रमणं भवेत्॥
पूर्व्वाह्ने पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः।
अपराह्ने तु पञ्चैव श्रौते स्मार्त्ते च कर्म्मणि॥

(अनेन रात्रौ षड़शीत्यामतीतायामुत्तरदिने पूर्व्वाह्ने पञ्चनाड्यः पुण्या भवन्ति)। भाविन्याञ्च पूर्व्वदिवसे अपराह्ने पञ्चनाड्यः पुण्या भवन्तीत्युच्यते।

'नृयुक्' मिथुनराशिः।

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्।

रात्रौ संक्रमणे पुण्यं दिनार्द्धं स्नान-दानयोः॥
अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया।
ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयम्॥
पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः।
प्राहुर्द्दिनद्वयं पुण्यं मुक्त्वा मकर-कर्कटौ॥

अयमर्थः पूर्व्वरात्रसंक्रमणे पूर्व्वस्याह्न-उत्तरार्द्धे दानादि-क्रिया। अपररात्रसंक्रमणे तु उत्तरदिवसस्य पूर्व्वाह्ने दानादि क्रिया। अयनरात्र-संक्रमे तु उत्तरदिवसस्य पूर्व्वाह्ने दानादि क्रिया। मध्यरात्रसंक्रमे तु दिनद्वयं पुण्यम्। रात्रौ स्नान-दानादि प्रतिषेधात्। यस्तु संश्रूयते। संक्रान्त्यादिषु रात्रावपि स्नानदाना-दिकं कुर्य्यादिति तद्दक्षिणोत्तरायणविषयम्। अतएवोक्तम् मुक्त्वा मकरकर्कटाविति। ततश्च मकर-कर्कटयो रात्रावपि स्नान-दानानुग्रहे या याः सन्निहिता नाड्य इत्यवधेयम्। रात्रौ स्नान-दानादिप्रतिषेधस्तु संक्रान्त्यन्तरे व्यतिष्ठत एवेति।

विषुवादिषु सूक्ष्मपुण्यकालमाह।

गालवः। विषुवे षण्मुहूर्त्तं स्यात् षडशीतिमुखे द्वयम्।
तथा विष्णुपदे त्रीणि पुण्यानि मुनयो विदुः॥

फलमाह भरद्वाजः।

षडशीत्यान्तु यद्दानं यद्दानं विषुवे द्वये।
दृश्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते॥

विष्णुपदादिसूक्ष्मतमं पुण्यकालमाह।

गालवः। स्थिरभे विष्णुपदं षडशीतिमुखं द्वितनुभे तुलामेषे।
विषुवन्तुर्य्ये दक्षायनं मृगे सौम्यकं सूर्य्ये॥

पूर्व्वस्मात् कीर्त्यास्यातमेतत् ।

अयनांशकतुल्येन कालेनैतत् स्फुटं भवेत् ।
सर्व्वविष्णुपदाद्युक्तभेदादि ह्ययनेऽन्यथा ॥
मृग-कर्कादिगे सूर्य्ये याम्योदगयने सति ।
तदा संक्रान्तिदाने स्युरुक्ता विष्णुपदादयः ॥

(अयमर्थः राशिं प्रति त्रिंशदंशका भवन्ति सूर्य्यश्च प्रति-दिनमेकैकमंशं भुङ्क्ते तत्र यावद्भिरंशैरयनच्युतिर्भवति तावता सूर्य्यस्य भोग्यकालेन भाविनां विष्णुपदादिकानां च्युतिर्भवतीति ततश्च यदा द्वादशभिरयनच्युतिर्भवति तदाभाविन्याः संक्रान्ते-र्द्वादशभिर्दिनैरर्व्वाक् पुण्यकालो भवति तस्मिंश्च तत्संक्रान्तिनिमित्तं दानादि कर्त्तव्यमिति एवं न्यूनातिरिक्तेष्वपि बोद्धव्यम् । न केवलमादित्यस्यैव संक्रमसमये पुण्यकालः किन्तु सर्व्वेषामपि ग्रहाणां नक्षत्र-राशिसंक्रमे पुण्यकालो भवतीति ॥

तदुक्तं ज्योतिःशास्त्रे ।

नक्षत्र-राश्यो रविसंक्रमे स्युरर्व्वाक-परत्रापि रसेन्दुनाड्यः ।
पुण्यास्तथेन्दोस्त्रिधरापलैर्युगा एकैव नाडी मुनिभिः शुभोक्ता ॥
नाड्यश्चतस्रः सपला कुजस्य बुधस्य तिस्रः पलविंशयुक्ताः ।
आद्यर्द्धनाड्यः पलसप्तयुक्ता गुरोस्तु शुक्रे सपलाश्चतस्रः ॥
द्विनागनाड्यः पलसप्तयुक्ता शनैश्चरस्याभिहिताः सुपुण्याः ।
आद्ये तु मध्ये जप-दान-होमं कुर्व्वन्नवाप्नोति सुरेन्द्रधाम ॥

अस्यार्थः ।

(आदित्यस्य राशि-नक्षत्रगमने अर्व्वाक् परतश्च षोड़श घटिकाः पुण्यकालः । तथा चन्द्रस्यापि राशि-नक्षत्रगमने घटिकैका पलानि-

त्रयोदश अर्व्वाक्परतश्च पुण्यकालः। एवं मङ्गलस्य घटिका-चतस्रः पलमेकञ्च पुण्यकालः। तथा बुधस्य तिस्रो घटिका चतुर्द्दशपलानि पुण्यकालः। बृहस्पतेरपि सार्द्धाश्चतस्रो घटिकाः सप्तपलानि पुण्यकालः। शुक्रस्य चतस्रो घटिकाः पलमेकञ्च पुण्यकालः। शनैश्चरस्यापि द्वाशीतिघटिकाः सप्तपलानि पुण्यकाल इति॥

अथ प्रकीर्णकालाः॥

आह विष्णुः। अमावस्या व्यतीपातो ग्रहणं चन्द्र-सूर्य्ययोः।
मन्वादयो युगादिश्च संक्रान्तिर्वैधृतिस्तथा।
दिनक्षयं दिनच्छिद्रमवमञ्च तथा परम्।
द्वेऽयने विषुवद्युग्मं षडशीतिमुखस्तथा।
चतस्रो विष्णुपद्यश्च पुत्त्रजन्मादि चापरम्।
आदित्यादिग्रहाणाञ्च नक्षत्रैः सह सङ्गमे।
विज्ञेयः पुण्यकालोयं ज्योतिर्व्विद्भिर्विचार्य्य च।
तत्र दानादिकं कुर्य्यादात्मनः पुण्यवृद्धये॥

'अमावास्यादीनि' प्रसिद्धानि। दिनक्षयमुक्तम् पद्मपुराणे।
द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः।
वशिष्ठोप्याह। एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्॥

दिनच्छिद्रलक्षणमाह।

भृगुः। तिथ्यर्द्धतिथियोगर्क्षच्छेदादौ शशिपर्व्वणः।
सदृशो दिवसच्छिद्रसमाख्यो प्राह भार्गवः॥

(अयमर्थः तिथ्यर्द्धं करणं करण-तिथि-योग-नक्षत्राणा-

मन्ते आदौ च पर्व्वकालः सोमग्रहणतुल्यः स च दिनच्छिद्र संज्ञइति) ।

कालमानमप्युक्तं तेनैव ।

छेदादिकालः कथितस्तिथिक्षत्योर्घटीद्वयम् ।
नाग-वह्नि-पलोपेतं तद्भे तत्त्वपलैर्युतम् ॥
पलैः षोड़शभिर्युक्तं नाडिकाद्वितयं युतेः ।
छेदादिसमयः प्रोक्तो दानेऽनन्तफलप्रदः ॥

'क्षतिः' करणं । 'नागः' अष्टौ । 'वह्नयः' त्रयः । 'भं' नक्षत्रम् ।
'तत्त्व' पञ्चविंशतिः । 'युतिः' योगः ।
तदयमर्थः सिद्धो भवति ।

(तिथिकरणयोराद्यन्ते घटिकाद्वयमष्टत्रिंशत्पलानि पुण्यकालः) ।
(नक्षत्रस्य तु पञ्चविंशतिपलैर्युक्तं घटिकाद्वयम्) ।
(योगस्यापि षोड़शभिः पलैर्युक्तं घटिकाद्वयमिति) ।

अवमलक्षणमाह ।

विष्णुः । तिथित्रयं स्पृशत्येको वारः स्यादवमं हि तत् ।
त्रिवारस्पृक् तिथिर्यत्र दिनस्पृक् च तदुच्यते ॥
(अत्र दिनक्षयावमयोरियान् भेदः) ।
यत्र तिथिद्वयावसाने वारावसानं स दिनक्षयः ।
यत्र तिथिद्वयावसानेपि वारानुवृत्तिः सोऽवम इति ।

अत्रप्रोक्तं । एकादश्यप्यमावस्या-पूर्णिमा-पुनर्जन्म च ।
वैधृतिश्च व्यतीपातो भद्रा चावमवासरः ॥
युगमन्वादयस्ते स्युरिन्दुपर्व्वसमानकाः ।
क्रान्तिसाम्यं दिनच्छिद्रं ग्रहाणां भगमस्तथा ॥

'भगमः' राशिनक्षत्रेषु गमनम्।

देवी पुराणे। व्यतीपातो विष्णुपदं षडशीतिमुखन्तथा।
क्रान्तिसाम्यममावास्या ग्रहणं वैधृतिश्च यः।
संक्रान्तिश्च दिनच्छिद्रं तिथिवृद्धिर्दिनक्षयः।
इत्यादि पुण्यकालस्तु होम-दानादिकर्म्मणः॥

स्कन्दपुराणे। ग्रहणं चन्द्रसूर्य्याभ्यामुत्तरायणमुत्तमम्।
विषुवं सव्यतीपातं षडशीतिमुखन्तथा।
दिनच्छिद्राणि संक्रान्तिर्भ्रयं विष्णुपदं पुनः।
इति कालः समाख्यातः पुंसां पुण्यविवर्द्धनः।
अस्मिन् दत्तानि दानानि स्नान-होम-तपांसि च।
अनन्तफलदानि स्युः स्वर्ग-मोक्षप्रदान्यपि॥

आह च्यवनः।

अमावास्या-संक्रान्ति-व्यतीपातविषुवा-यन-षडशीतिमुख--विष्णुपदादि-वैधृति-ग्रहणान्तं स एव पुण्यकालः॥

अयने षडशीतौ च चन्द्र-सूर्य्यग्रहे तथा।
युगादौ वैधृतौ चैव दत्तं भवति चाक्षयम्॥

आह शातातपः।

अयनेषु तु यद्दत्तं षडशीतिमुखेषु च।
चन्द्र-सूर्य्योपरागे च दत्तं भवति चाक्षयम्॥

नारदः। विशाखासु यदा भानुःकृत्तिकासु च चन्द्रमाः।
स योगः पद्मको नाम पुष्करेष्वति दुर्लभः॥

अथ निषिद्धकालाः। तत्र शङ्खलिखितौ।

आहारं मैथुनं निद्रां सन्ध्याकाले तु वर्ज्जयेत्।

कर्म्म चाध्ययनञ्चैव तथा दानप्रतिग्रहौ ॥

स्कन्दपुराणे । रात्रौ दानं न कर्त्तव्यं कदाचिदपि केनचित् ।

हरन्ति राक्षसा यस्मात् तस्माद्दातुर्भयावहम् ॥

विशेषतो निशीथे तु न शुभं कर्म्म शर्म्मणे ।

अतो विवर्ज्जयेत् प्राज्ञो दानादिषु महानिशाम् ॥

तथा स्नानञ्चैव महादानं स्वाध्यायन्तु न तर्पणम् ।

प्रथमेऽब्दे न कुर्व्वीत महागुरुनिपातने ॥

आह ज्योतिःपराशरः ।

अग्न्याधेयं प्रतिष्ठाञ्च यज्ञ-दानाद्यभिग्रहान् ।

माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत् ॥

वापी-कूप-तड़ागादि प्रतिष्ठोदङ्मुखे रवौ ।

दक्षिणाशामुखे कुर्व्वन् न तत्फलमवाप्नुयात् ॥

बाले वा यदि वा वृद्धे शुक्रे वास्तमुपागते ।

मलमासइवैतानि वर्जये * द्यत्नतः सदा ॥

'मलमासः' अधिकमासः । तल्लक्षणमाह ।

प्रचेताः । एकराशिस्थिते सूर्य्ये यदा दर्शद्वयं भवेत् ।

हव्य-कव्य-क्रियाहन्ता तदा ज्ञेयोऽधिमासकः ॥

पैठीनसिः । वत्सरान्तर्गतः पापी यज्ञानां फलनाशकृत् ।

नैरृत्य-यातुधानानामसंक्रान्तोऽधिमासकः ॥

मलिम्लुचमसंक्रान्तं सूर्य्यसंक्रान्तिवर्ज्जितम् ।

अधिमासं विजानीयात् सर्व्वकर्म्मसु गर्हितम् ॥

---

* देवदर्शनमिति क्वचित्पाठः ।

तथा। श्रौत-स्मार्त्तक्रियाः सर्व्वा द्वादशे मासि कीर्त्तिताः।
त्रयोदशे तु ताः सर्व्वा निष्फला इति संज्ञिताः॥
तस्मात् त्रयोदशे मासि न कुर्य्यात्ताः कथञ्चन।
कुर्व्वन्ननर्थमेवाशु कुर्य्याच्चात्मविनाशनम्॥

हारीतः। इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ॥
तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः॥
तस्मिंस्तु प्राकृते मासि कुर्य्याच्छ्राद्धं यथाविधि।
तथैवाभ्युदयं कार्य्यं नित्यमेकं हि सर्व्वदा॥

व्यासः। भानुना लङ्घितो मासो ह्यनर्हः सर्व्वकर्म्मसु।
षष्टिभिर्द्दिवसैर्म्मासः कथितो वादरायणैः।
पूर्व्वार्द्धन्तु परित्यज्य उत्तरार्द्धं प्रशस्यते॥
उपाकर्म्म च हव्यञ्च कार्य्यं पर्व्वोत्सवस्तथा।
उत्तरे नियतिः कुर्य्यात् पूर्व्वे तन्निष्फलं भवेत्॥

पाराशरः। उपाकर्म्म-तथोत्सर्गः * प्रसवाहो-त्सवा-ष्टकाः।
मासवृद्धौ पराः कार्य्या वर्जयित्वा तु पैतृकम्॥

तथा ज्योतिः शास्त्रे।

धटकन्यागते सूर्य्ये वृश्चिके वाथ धन्विनि।
मकरे वाथवा कुम्भे नाधिमासो विधीयते॥

माण्डव्यः। गर्भे वार्द्धुषिके प्रेते भूते नित्ये तु मासिके।

---

* प्रसवाहोऽष्टकादय इति पाठान्तरम्।

प्रथमे चाब्दिके चैव नाधिमासो विधीयते ॥

अथ निषिद्धस्यापि धर्म्मविशेषेण पुण्यकालत्व मभिधीयते।

देवलः। राहुदर्शन-संक्रान्ति-विवाहा-त्यय-वृद्धिषु।
स्नान-दानादिकं कुर्य्युर्निशि काम्यव्रतेषु च ॥

वृद्धवसिष्ठः। ग्रहणो-द्वाह-संक्रान्ति * यात्रादिप्रसवेषु च।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥

विष्णुधर्म्मोत्तरे। पूजनञ्चतिथीनाञ्च पात्रानामपि पूजनम्।
तत्र रात्रौ तथा ज्ञेयं गवामुक्तञ्च पूजनम् ॥

महाभारते। रात्रौ दानं प्रशंसन्ति विना त्वभयदक्षिणाम्।
विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम् ॥

श्रीमार्कण्डेयपुराणे।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम्।
स्नानं तत्र न कुर्व्वीत काम्य-नैमित्तिकादृते ॥

विश्वामित्रः। महानिशा द्वे घटिके रात्रौ मध्यमयामयोः।
नैमित्तिकन्तथा कुर्य्यान्नित्यन्तु न मनागपि ॥

अथ निमित्तानुरोधेन सदा पुण्यकालाः ॥

विष्णुधर्म्मोत्तरे। कालः सर्व्वोपि निर्द्दिष्टः पात्रं सर्व्वमुदाहृतम्।
अभयस्य प्रदाने तु नात्र कार्य्या विचारणा।
तदैव दानकालस्तु यदा भयमुपस्थितम् ॥

तथा। न कालनियमो दृष्टो दीयमाने प्रतिश्रये।
तदैव दानमस्योक्तं यदा पात्रसमागमः ॥
न हि कालं प्रतीक्षेत जलं दातुं तृषान्विते।

---

* यात्रायामिति क्वचित्पाठः।

अन्नोदकं सदा देयमित्याह भगवान्मनुः॥

स्कन्दपुराणे। अर्द्धप्रसूतां गां दद्यात् कालादि न विचारयन्।
कालः स एव ग्रहणे यदा सा द्विमुखी तु गौः॥

व्यासः। आसन्नमृत्युना देया गौः सवत्सा तु पूर्व्ववत्।
तदभावे तु गौरेव नरकोद्धरणाय वै॥
तदा यदि न शक्नोति दातुं वैतरणीन्तु गाम्।
शक्तोऽन्योऽशक्ततदा दत्त्वा श्रेयो दद्यान्मृतस्य च॥

वाराहपुराणे। व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं रवेः।
पुण्यकालास्तदा सर्व्वे यदा मृत्युरुपस्थितः।
तदा गो-भू-हिरण्यादि दत्तमक्षयतामियात्॥

तथा। यावत् कालं सुते जाते न नाड़ी छिद्यते नृप।
चन्द्र-सूर्य्योपरागेण तमाहुः समयं समम्॥

विष्णुधर्म्मोत्तरे। अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः।
संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्त्तितम्॥

मत्स्यपुराणे। यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितम्।
तदेव दानकालः स्याद्यतोऽनित्यं हि जीवितम्॥

इति कालनिरूपणम्॥

अथ देशाख्यं दानाङ्गमुपवर्ण्यते॥

तत्र देवीपुराणे। सर्व्वे शिवाश्रमाः पुण्याः सर्व्वा नद्यः शुभप्रदाः।
दान-स्नानो-पवासादिफलदाः सततं नृणाम्॥

आह विष्णुः। चातुर्व्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते।
* स म्लेच्छदेशो विज्ञेय आर्य्यदेशस्ततः परः॥

---

* तं म्लेच्छदेशं जानीयादिति क्वचित्पाठः।

भविष्यपुराणे। न क्षीयते यत्र धर्म्मश्चतुष्पात् सकलो द्विज।
स देशः परमो नित्यं सर्व्वपुण्यतमो मम॥
विद्वद्भिः सेवितो यश्च यस्मिन् देशे प्रवर्त्तते।
शास्त्रोक्तश्चापि विप्रेन्द्र स देशः परमोमतः॥
याज्ञवल्क्यः। यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्म्मान्निबोधत॥
श्रीमार्कण्डेयपुराणे।
सह्यस्य चोत्तरो यस्तु यत्र गोदावरी नदी।
पृथिव्यामपि कृत्स्नायां स प्रदेशोऽतिपावनः॥
व्यासः। गङ्गाद्वारे प्रयागे च अविमुक्ते च पुष्करे।
नगरे चाट्टहासे च गङ्गासागरसङ्गमे।
कुरुक्षेत्रे गयायाञ्च तीर्थे वामरकण्टके।
एवमादिषु तीर्थेषु दत्तमक्षयतामियात्।
सर्व्वतीर्थमयीगङ्गा तत्र दत्तं महाफलम्॥
स्कन्दपुराणे। वाराणसी कुरुक्षेत्रं प्रयागः पुष्कराणि च।
गङ्गा-समुद्रतीरञ्च नैमिषामरकण्टकम्।
श्रीपर्व्वत-महाकालं गोकर्णं वेदपर्व्वतम्।
इत्याद्याः कीर्त्तिता देशाः सुरसिद्धनिषेविताः॥
सर्व्वे शिलोच्चयाः पुण्याः सर्व्वा नद्यः ससागराः।
गो-सिद्धमुनि-वासाश्च देशाः पुण्याः प्रकीर्त्तिताः।
एषु तीर्थेषु यद्दत्तं फलस्थानन्त्यकृद्भवेत्॥
पद्मपुराणे। गङ्गा चोदङ्मुखी यत्र यत्र प्राची सरस्वती।
तत्र शतगुणं पुण्यं स्नान-दानेषु सुव्रत॥
लिङ्गं वा प्रतिमा वापि दृश्यते यत्र कुत्रचित्।

तत् सर्वं पुण्यतां याति दानेषु च महाफलम्॥

ब्रह्मप्रोक्ते। नदीतीरे गवां गोष्ठे ब्राह्मणानाञ्च वेश्मनि।

दत्तं शतगुणं प्राहुर्लक्षमादित्यसन्निधौ॥

शिवस्य विष्णोर्वह्नेश्च सन्निधौ दत्तमक्षयम्।

तथा। अग्निहोत्रे गवां गोष्ठे वेदघोषपवित्रिते॥

शिवायतनसंस्थाने यदल्पमपि दीयते।

तदनन्तफलं ज्ञेयं शिवक्षेत्रानुभावतः॥

मत्स्यपुराणे। शालग्रामसमुद्भूतः शैलश्चक्राङ्कमण्डितः।

यत्र तिष्ठति वसुधे तत्क्षेत्रं योजनत्रयम्॥

द्वारवत्याः शिला देवि मुद्रिता मम मुद्रया।

यत्रापि नीयते तस्मात्तीर्थं द्वादशयोजनम्॥

तथा। प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च।

दत्त्वा चाक्षयमाप्नोति नदी-पुण्यवनेषु च॥

'आयतने' शङ्करादिक्षेत्रे।

तदुक्तं भविष्यपुराणे।

क्रोशमात्रं भवेत् क्षेत्रं शिवस्य परमात्मनः।

प्राणिनान्तत्र पञ्चत्वं शिवसायुज्यकारणम्।

फलं दत्त-हुतानाञ्च अनन्तं परिकीर्त्तितम्॥

मनुजैः स्थापिते लिङ्गे क्षेत्रे मानमिदं स्मृतम्।

स्वयम्भुवि सहस्रं स्यादार्षे चैव तदर्द्धकम्॥

अथ श्रद्धाख्यं दानाङ्गमुच्यते।

स्कन्दपुराणे। दानं दद्यात् प्रयत्नेन श्रद्धा-पूतमतन्द्रितः।

श्रद्धाकृतं स्वल्पमपि दानमानन्त्यमश्नुते॥

अश्रद्धयापि यद्दत्तं सर्वस्वमपि सत्तम।
न तत् फलाय भवति तस्माच्छ्रद्धां समाश्रयेत्॥
देवलः। प्रदाय शाकमुष्टिम्बा श्रद्धा-भक्ति-समुद्यतम।
महते पात्रभूताय सर्व्वाभ्युदयमाप्नुयात्॥
महाभारते। श्रद्धया साध्यते धर्म्मो महद्भिर्नार्थराशिभिः।
निष्किञ्चनास्तु मुनयः श्रद्धावन्तो दिवं गताः॥
धर्म्मार्थ-काम-मोक्षाणां श्रद्धा परमकारणम्।
पुंसामश्रद्दधानानां न धर्म्मो नापि तत्फलम्॥
वह्निपुराणात्। श्रद्धापूर्व्वाः सर्वधर्म्माः श्रद्धामध्यान्तसंस्थिताः।
श्रद्धा-निष्ठाः-प्रतिष्ठाश्च धर्म्माः श्रद्धैव कीर्त्तिताः॥
श्रुतिमात्ररसाः सूक्ष्माः प्रधानपुरुषेश्वराः।
श्रद्धामात्रेण गृह्यन्ते न वाक्येन न चक्षुषा॥
कायक्लेशैर्नबहुभिर्न चैवार्थस्य राशिभिः।
धर्म्मः सम्प्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि॥
श्रद्धा धर्म्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतन्तपः।
श्रद्धा-स्वर्गश्च मोक्षश्च श्रद्धा सर्व्वमिदं जगत्॥
सर्वस्वं जीवितञ्चापि दद्यादश्रद्धया यदि।
नाप्नुयात् सकलं किञ्चित् अश्रद्दधानस्ततो भवेत्॥
वेदव्यासः। श्रद्धा वै सात्त्विकी देवी सूर्य्यस्य दुहिता नृप।
सवित्री प्रसवित्री च जीवविश्वासिनी तथा।
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धञ्च भारत॥
महाभारते। क्रियावान् श्रद्दधानश्च दाता प्राज्ञोऽनसूयकः
धर्म्मा-धर्म्म-विशेषज्ञः सर्वन्तरति दुस्तरम्॥

स्कन्द पुराणे। श्रद्धा मातेव जननी ज्ञानस्य सुकृतस्य च।
तस्माच्छ्रद्धां समुत्पाद्य ज्ञानं सुकृतमर्जयेत्॥
मनुः। श्रद्धयेष्टञ्च पूर्त्तञ्च नित्यं कुर्य्यात् प्रयत्नतः।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः॥
याज्ञवल्क्यः। दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः।
याचितेनापि दातव्यं श्रद्धापूतन्तु शक्तितः॥
बृहस्पतिः। मन्त्राज्यदोषाद्धोमे तु तपसीन्द्रियदोषतः।
न्यूनता स्यात्प्रदाने तु श्रद्धायुक्ते भवेत् क्वचित्॥

(एतच्च देशनिरूपणञ्च पूर्वं व्रतखण्डादावेव प्रपञ्चितम् इहतु पात्रादिदानाङ्गनिरूपणप्रतिज्ञानिर्वहणार्थं दिङ्मात्रमेव प्रदर्शितम्। न चात्र भविष्यपुराणमतेन दानाङ्गपञ्चके निरूप्यमाणे दानाङ्गभूतस्यापि दातुः कथं पृथगनुपादनमिति शङ्कनीयं दानस्य दातृव्यतिरेकेणानुपपत्तेस्तेनैव तदाक्षेपात् एवं तर्हि देश-कालादेरप्यनुपादानंस्यात्

अथ सामान्येनैव तदाक्षेपेपि श्रद्धावर्त्तादिविशेषलाभार्थं तन्निरूपणमिति दातापि तर्हि शुचित्वादिविशेषलाभार्थं निरूपणीयः स्यात् उच्यते तत्तद्विधायकवाक्यगताख्यातप्रत्ययोपात्तत्वादेव तदनिरूपणं नत्वाक्षेपात् शुचित्वादिविशेषलाभस्तु वाक्यान्तरादिति कर्त्तनभिधानपक्षे तु प्रत्ययोपात्तभावनयैवासाधारण्येन तदाक्षेपान्न देशादिसाम्यं। एवमादिक्लेशपर्य्यालोचनया षडङ्गदानमितिवदता देवलेन तु निरूप्यतएव)।
तथाहि। दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्म्मयुक्।
देश-कालौ च दानानामङ्गान्येतानि षड्विदुरिति।

(तल्लक्षणन्तु प्रागभिहितमिति तु न पुनराद्रियामहे ।
न तु श्रद्धादिवदितिकर्त्तव्यतापि दानाङ्गमित्यतः प्रति-
पादनीयैव) ।

यदाह याज्ञवल्क्यः । देश-काल-उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत् सकलं धर्म्मलक्षणमिति ॥
'उपायः' इतिकर्त्तव्यता । अत्रोच्यते ।

(इतिकर्त्तव्यताविशेषास्तावत्तत्र दानविशेषेष्वेव प्रतिपाद-
यिष्यन्ते तेषामिह प्रतिपादयितुमशक्यत्वात् सामान्येनेति-
कर्त्तव्यता पुनरवश्यं वक्तव्येति तदर्थमिदं प्रकरणमारभ्यते ।
इति श्रद्धा निरूपणम्) ।

अथ दानसामान्यविधिरुच्यते । तत्र दातृधर्म्माः ।

भविष्य पुराणे । सम्यक् संसाधनं कर्म्म कर्त्तव्यमधिकारिणा ।
निष्कामेन महावीर काम्यं कामान्वितेन च ॥
आचारयुक्तः श्रद्धावान् प्राज्ञो योऽध्यात्मवित्तमः ।
कर्म्मणां फलमाप्नोति न्यायार्जितधनश्च यः ॥
'सम्यक्' प्रथमकल्पादिना । 'संसाधनं' यथाविहित-
साधनम् । 'अधिकारिणा' अर्थिना' समर्थेन विदुषा च ।
'अध्यात्मवित्तमः' परलोकफलभागिन्यात्मनि दृढ़प्रत्यय-
वान् ।
'न्यायार्ज्जितधनः' सद्व्यर्जितधनः ।

आपस्तम्बः । प्रयोजयिता-नुमन्ता कर्त्तेति स्वर्गनरकफलेषु
भागिनः यो भूय आरभते तस्मिन् फलविशेषः ॥

याज्ञवल्क्यः । विधिदृष्टन्तु यत्कर्म्म करोत्यविधिना तु यः ।

फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत्

मनुः। प्रभुः प्रथमकल्पस्य योनुकल्पेन वर्त्तते।

न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्॥

'साम्परायिकं' पारलौकिकम्।

योगियाज्ञवल्क्यः। श्रद्धा-विधि-समायुक्तं कर्म्म यत् क्रियते नृभिः।

सुविशुद्धेन भावेन तदानन्त्याय कल्पते॥

विधिहीनं भावदुष्टं कृतमश्रद्धया च यत्।

तद्धरन्त्यसुरास्तस्य मूढ़स्य दुष्कृतात्मनः॥

भविष्योत्तरे। काम्यो दानविधिः पार्थ क्रियमाणो यथातथम।

फलाय मुनिभिः प्रोक्तो विपरीतो भयावहः॥

गारुड़पुराणे। प्रशस्तदेश-काले च पात्रे दत्तं तदक्षयम्।

कोटिजन्मार्जितं पापं ददतस्तस्य नश्यति॥

सकलाङ्गोपि सम्भारो यस्य दानक्रियाविधौ।

सम्भवेदपि पापीयान् स सद्यो मुक्तिमेष्यति॥

देवीपुराणे। शुचिना भावपूतेन क्षान्ति-सत्य-व्रतादिना।

अपि सर्षपमात्रोपि दातारं तारयेदिह॥

दक्षः। दानञ्च विधिवद्देयं काले पात्रे गुणान्विते॥

यमः। सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम्।

देशे-काले विधानेन पात्रे दत्तं विशेषतः॥

'गुणवत्' उत्तमफलम्।

तथा। दानं हि बहुमानाद्यो गुणवद्भ्यः प्रयच्छति।

स तु प्रेत्य धनं लब्ध्वा पुत्रपौत्रैः सहाश्नुते॥

परस्यानुपहत्येह दानं दत्त्वा विचक्षणः।

सुखोदयं सुखोदर्कं प्रेत्य वै लभते धनम्॥

'अनुपहत्य, पीड़ामनुत्पाद्य, "सुखोदर्कं" सुखोत्तरफलम्।

रामायणे। नावज्ञया प्रदातव्यं किञ्चिद्वा केनचित् क्वचित्।

अवज्ञया हि यद्दत्तं दातुस्तद्दोषमावहेत्॥

शातातपः। अभिगम्य तु यद्दानं यच्च दानमयाचितम्।

विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते॥

प्रच्छन्नानि च दानानि ज्ञानञ्च निरहंकृतम्।

तपांसि च सुतप्तानि तेषां फलमनन्तकम्॥

ब्रह्मप्रोक्ते। गुप्ताध्यायी गुप्तदाता गुप्तपूजाग्निसत्क्रियः।

पूज्यते सर्व्वलोकेषु सर्व्वदेवैः शतक्रतुः॥

व्यासः। स्वयं नीत्वा तु यद्दानं भक्त्या पात्राय दीयते।

तत्सहस्रगुणं भूत्वा दातारमुपतिष्ठति॥

वृहस्पतिः। कृते प्रदीयते गत्वा त्रेतायां दीयते गृहे।

द्वापरे च प्रार्थयति कलौ चानुगमान्विते॥

(प्रतिग्रहीतृगृहं गत्वा यद्दीयते तत्कृते युगे

दत्तं भवति)। प्रतिग्रहीतारं स्वगृहमाहूय यद्दीयते

तत्त्रेतायुगे दत्तं भवतीत्यर्थः। एव मुत्तरत्रापि॥

वह्निपुराणे। तमोवृतस्तु योदद्याद्भयात् क्रोधात्तथैव च।

भुङ्क्ते दानन्तु तत्सर्व्वं भुङ्क्ते गर्भस्थ एव च॥

ईर्षा-मन्युमनाश्चैव दम्भार्थं चार्थ-कारणात्।

योददाति द्विजातिभ्यः स बालत्वे तदश्नुते॥

देशे काले च पात्रे च योददाति द्विजातिषु।

परितुष्टेन मनसा यौवने तु तदश्नुते॥

वैश्वदेवविहीनं च सन्ध्योपासनवर्जितम्।
यद्दानं दीयते तत्तु वृथकाले समश्नुते॥

आह मनुः। न विस्मयेत तपसा वदेदिष्ट्वा नचानृतम्।
नार्त्तोविप्रवदेद्विप्रान् न दत्त्वा परिकीर्त्तयेत्॥
यज्ञोऽनृतेन चरति तपः चरति विस्मयात्।
आयुर्व्विप्रापवादेन दानन्तु परिकीर्त्तनात्॥

यमः। आर्त्तां ज्ञात्वा प्रदातारं दानकाले निषेधकम्।
दत्त्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातकम्॥

हारीतः। दानं स्नानं तपस्त्यागोमन्त्रकर्म्मविधिक्रियाः।
मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः॥

आह प्रचेताः। स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि।
पवित्राणां तथा जाप्ये दाने च विधिचोदिते॥

वायुपुराणे। क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः।
भवन्ति न तथा तस्य क्रियाः सर्व्वा न संशयः॥

शाटाायनः। दानमाचमनं होमं भोजनं देवतार्च्चनम्।
प्रौढ़पादोन कुर्व्वीत स्वाध्यायं पितृतर्पणम्॥
आसनारूढ़पादस्तु जान्वोर्व्वा जङ्घयोस्तथा।
कृतावसक्थिकोयश्च प्रौढ़पादः स उच्यते॥

वशिष्ठः। यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा।
जपो होमस्तथा दानं तत् सर्व्वं निष्फलं भवेत्॥

विष्णुपुराणे। होमदेवार्च्चनाद्यासु क्रियास्वाचमने तथा।
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे॥
'द्विजवाचनके, द्विजस्वस्तिवाचनादौ।

